सिलाअले आलिहिआ ताए पक्खवादिणा एदेण पडिवादअन्तस्सावि मित्तावसुणो णाहं पडिग्गिहिदेत्ति जादणिव्वेदाए इमाए एव्वं व्वव-सिदं। [ या सा प्रियवयस्येन ते कापि हृदयवल्लभा शिलातल आलि-खिता तस्याः पक्षपातिनैतेन प्रतिपादयतोऽपि मित्रावसोर्नाहं प्रतिगृहीतेति जातनिर्वेदयानयैवं व्यवसितम । ]

नायकः—( सहर्षमात्मगतम् ) कथमियमेवासौ विश्वावसोर्दुहिता मलयवती । अथवा रत्नाकरादृते कुतश्चन्द्रलेखायाः प्रसूतिः । हा कथं वञ्चितोऽस्मि ।

विदूषकः—भोदि जइ एवं ता अणवरद्धो दाणि पिअवअस्सो। एसा खु आलिहिदा । अहवा जइ ण पत्तिआअदि तदा सअ एव्व गदुअ सिलाअलं पेक्खदु भोदी। [भवति यद्येवं तदनपराद्ध इदानीं प्रियवयस्यः । एषा खल्वालिखिता । अथवा यदि न प्रत्येति तदा स्वयमेव गत्वा शिलातलं प्रेक्षतां भवती । ]

नायिका—( सहर्षं सलज्जं च नायकं पश्यन्ती हस्तमाक्षेप्तुमिच्छति ) मुञ्च मुञ्च मे अग्गहत्थं । [ मुञ्च मुञ्च मेऽग्रहस्तम् ]

नायकः—( सस्मितम् ) न तावन्मुञ्चामि यावन्मम हृदयवल्लभा शिलायामालेख्यगता न पश्यसि । ( सर्वे चन्दनलतागृहं प्रविशन्ति )

विदूषकः—(कदलीपत्रमपनीय) भोदि पेक्ख पेक्ख एदं से हिअअवल्लह जणं । [ भवति प्रेक्षस्व प्रेक्षस्वैतमस्य हृदयवल्लभं जनम् । ]

नायिका—( निरूप्यापवार्य सस्मितम् ) चउरिए अहं विअ आलिहिदा । [ चतुरिके अहमिवालिखिता ।]

चेटी—( चित्राकृतिं नायिकां च निर्वर्ण्य ) भट्टिदारिए किं भणासि अहं विअ आलिहिदेत्ति । ईदिसं से सारिच्छं जेण ण जाणीअदि किं दाव इह जेव्व सिलाअले भट्टिदारिआए पडिबिम्बं संकन्तं आदु तुमं आलि-हिदेत्ति । [ भर्तृदारिके किं भणस्यहमिवालिखितेति । ईदृशमस्याः सा-

---

१ पच्चाक्खन्तस...णाहं पडिच्छामि त्ति सुणिअ । ( प्रत्याख्यातस्य...नाहं प्रतीच्छामीति श्रुत्वा ) २ कष्टं मनाग् वञ्चितोऽस्मि ।

दृश्यं येन न ज्ञायते किं तावदिहैव शिलातले भर्तृदारिकायाः प्रतिबिम्बं
३३ संक्रान्तमुत त्वमालिखितेति । ]

नायिका—( विहस्य ) हञ्जे दुज्जणीकिदह्मि इमिणा मे चित्तगदं दंस-
अन्तेण । [ दुर्जनीकृतास्म्यनेन मां चित्रगतां दर्शयता । ]

३६ विदूषकः—भो णिव्वुत्तो दाणिं गन्धव्वो विवाहो । ता मुञ्च दाव से
अग्गहत्थं । एसा खु कावि तुरिदतुरिदं इह एव्व आअच्छदि । [ भो
निर्वृत्त इदानीं गान्धर्वो विवाहः । तन्मुञ्च तावदस्या अग्रहस्तम् । एषा
३९ खलु कापि त्वरितत्वरितमिहैवागच्छति । ] ( नायको मुञ्चति ) ( प्रविश्य )

चेटी—( सहसोपसृत्य सहर्षम् ) भट्टिदारिए दिट्ठिआ वड्ढसि । पडिग्गि-
हिदा खु तुमं भट्टिणो जीमूदवाहणस्स गुरूहिं । [ भर्तृदारिके दिष्ट्या
४२ वर्धसे । प्रतिगृहीता खलु त्वं भर्तुर्जीमूतवाहनस्य गुरुभिः । ]

विदूषकः—( नृत्यन् ) ही ही भो सम्पुण्णा मणोरहा पिअवअस्सस्स ।
अहवा णहि णहि भोदीए मलअवदीए । अहवा ण एदाणं । ( भोजन-
४५ मभिनयन् ) मम एव्व एक्कस्स बह्मणस्स । [ ही ही भोः संपूर्णा मनोरथा
प्रियवयस्यस्य । अथवा नहि नहि भवत्या मलयवत्याः । अथवा नैतयोः ।
...ममैवैकस्य ब्राह्मणस्य । ]

४८ चेटी—( नायिकामुद्दिश्य ) आणत्तह्मि जुवराअमित्तावसुणा । जह अज्ज
एव्व मलअवदीए विवाहो । ता लहुं तं गेण्हिअ आअच्छत्ति । ता एहि
गच्छह्म । [ आज्ञप्तास्मि युवराजमित्रावसुना । यथाद्यैव मलयवत्या
५१ विवाहः । तल्लघु तां गृहीत्वागच्छेति । तदेहि गच्छावः । ]

विदूषकः—गदा खु तुमं दासीए धीए एदं गेण्हिअ । वअस्सेण
किं इध एव्व अवत्थिदव्वं । [ गता खलु त्वं दास्याःपुत्रि इमां गृहीत्वा ।
५४ वयस्येन किमिहैवावस्थातव्यम् । ]

चेटी—हताश मा तुवर । तुह्माणंपि ण्हवणकं आगदं एव्व । [ हताश
मा त्वरस्व । युष्माकमपि स्नपनकमागतमेव । ]

---

१ इदं चित्तं दंसअन्तेण । ( इदं चित्रं दर्शयता ) । २ पडिच्छिदा ( प्रतीष्टा ) । ३ विवाहूस्सवस्स मंगलं संवुत्तं भविस्सदि । ( विवाहोत्सवस्य मङ्गलं संवृत्तं भविष्यति । )

५७ ( नायिका सानुरागं सलज्जं च नायकं पश्यन्ती सपरिवारा निष्क्रान्ता )

( नेपथ्ये वैतालिकः पठति )

वृष्ट्या पिष्टातकस्य द्युतिमिह मलये मेरुतुल्यां दधानः
सद्यः सिन्दूरदूरीकृतदिवससमारम्भसन्ध्यातपश्रीः ।
[4]उद्गीतैरङ्गनानां चलचरणरणन्नूपुरह्लादहृद्यै-
रुद्वाहस्नानवेलां कथयति भवतः सिद्धये सिद्धलोकः ॥ १३ ॥

विदूषकः—( आकर्ण्य ) भो वअस्स दिट्ठिआ आगदं ण्हवअं । [ भो वयस्य दिष्ट्यागतं स्नपनकम् । ]

३ नायकः—(सहर्षम्) यद्येवं तत् किमिदानीमिह स्थितेन । आगच्छ । तातं नमस्कृत्य स्नानभूमिमेव गच्छावः ।

अन्योन्यदर्शनकृतः समानरूपानुरागकुलवयसाम् ।
केषांचिदेव मन्ये समागमो भवति पुण्यवताम् ॥ १४ ॥

( इति निष्क्रान्तौ )

इति द्वितीयोऽङ्कः ।



१ चूर्णैः । २ धूलीकृत । ३ गीतैः सिद्धाङ्गनानां । ४ अरुणमणिरणन्नूपुराराचहृद्यैः । सममनुरणयन्नूपुरारावहृद्यः । ५ प्रीतिकृतः । प्रीतिकृताम् ।

# तृतीयोऽङ्कः

( ततः प्रविशति मत्तो विचित्रविह्वलवेशश्चषकहस्तो विटः स्कन्धारोपितसुराभाण्डश्चेटश्च )

विट.—

णिच्चं जो पिवइ सुर जणस्स पिअसङ्गमं च जो कुणइ ।
मह दे दो च्चिअ देवो वलदेवो कामदेवो अ ॥ १ ॥

[ नित्यं य॰ पिवति सुरां जनस्य प्रियसंगम च य. कुरुते । मम तौ द्वावेव देवौ वलदेव. कामदेवश्च ॥ ( घूर्णन् ) सफल क्खु मे सेहर-
३ अस्स जीविअं ।

वच्छत्थलम्हि दइआ णीलुप्पळवासिआ मुहे मइरा ।
सीसम्मि अ सेहरओ णिच्चं चिअ संण्ठिआ जस्स ॥ २ ॥

[ सफल खलु मम शेखरकस्य जीवितम् । वक्षःस्थले दयिता नीलोत्पलवासिता मुखे मदिरा । शीर्षे च शेखरको नित्यमेव संस्थिता यस्य ॥
३ ( प्रस्खलन् ) अरे को म चालेदि । ( सहर्षम् ) अवस्सं णोमालिआ मं परिहसदि । [ अरे को मा चालयति । अवश्य नवमालिका मा परिहसति । ]

६ चेटः—भट्टक ण अ दाव सा अज्जवि इहागच्छदि । [ भर्तः न च तावत्साद्यापीहागच्छति । ]

विटः—( सरोषम् ) पढमपहरे एव्व मलअवदीए, विवाहमङ्गल णि-
९ वुत्त । ता कीस सा दाणि पमादेवि णागच्छदि । ( विचिन्त्य सहर्षम् ) अहवा अज्ज इमस्सि विवाहमहूसवे सव्वो एव्व णिअपणइणी-

---

१ मण्णे दो चिअ, अह त दो अवि (मन्ये द्वाविव,अथ तौ द्वावपि) २ दिण्णु । ( दत्तो ) ३ चेडिया । ( चेटिका ) ४ प्पदोसे । ( प्रदोषे )

जणसणाहो सिद्धविज्जाहरलोओ कुसुमाअरुज्जाणे आपाणअसोक्खमणुभाविस्सादित्ति तक्केमि । तहि एव्व णोमालिआ म अवेक्खमाणा चिट्ठदि । ता अहंपि तहि एव्व गमिस्सं । कीदिसो णोमालिआए विणा सेहरओ । [ प्रथमप्रहर एव मलयवत्या विवाहमङ्गलं निर्वृत्तम् । तत्कस्मात्सेदानीं प्रभातेऽपि नागच्छति । अथवाद्यामुष्मिन्विवाहमहोत्सवे सर्व एव निजप्रणयिजनसहायः सिद्धविद्याधरलोकः कुसुमाकरोद्यान आपानकसौख्यमनुभविष्यतीति तर्कयामि । तत्रैव नवमालिका मामवेक्षमाणा तिष्ठति । तदहमपि तत्रैव गमिष्यामि । कीदृशो नवमालिकया विना शेखरकः । ]

( प्रस्खलन् परिक्रामति )

चेटः—एदु एदु भट्टके । एदं कुसुमाअरुज्जाणं । ता पविसदु भट्टके । [ एत्वेतु भट्टारकः । इदं कुसुमाकरोद्यानम् । तत्प्रविशतु भट्टारकः । ] ( उभौ प्रवेशं नाटयतः ) ( ततः प्रविशति स्कन्धन्यस्तवस्त्रयुगलो विदूषकः )

विदूषकः—सुदं मए पिअवअस्सो कुसुमाअरुज्जाणं गमिस्सादित्ति । ता जाव तहि एव्व गमिस्सं । ( परिक्रम्यावलोक्य च ) इदं कुसुमाअरुज्जाणं जाव पविसामि । ( प्रविश्य भ्रमरबाधा नाटयन् ) अरे कीस उण एदे दुट्ठमहुअरा मं एव्व अभिद्दवन्ति । ( आत्मानमाघ्राय ) भोदु जाणिदं । जं तं मलअवदीबंधुजणेण जामादुअस्स पिअवअस्सोत्ति कदुअ सबहुमाणं सुगन्धवण्णकेहिं विलित्तोह्मि सन्ताणकुसुमसेहरअं च मम सीसे पिणद्धं सो खु एसो अच्चाअरो अणत्थीभूदो । ता किं दाणि एत्थ करिस्सं । अहवा एदेण एव्व मलअवदीसआसादो लद्धेण रत्तंसुअजुअलेण इत्थिआविव लंबं लंबं परिहिअ उत्तरीअकिदावगुण्ठणो गमिस्सं[1] । पेक्खामि दाव किं मे दासीएपुत्ता दुट्ठमहुअरा करिस्सन्ति । [श्रुतं मया प्रियवयस्यः कुसुमाकरोद्यानं गमिष्यतीति । तद्यावत्तत्रैव गमिष्यामि । ...इदं कुसुमाकरोद्यानं यावत्प्रविशामि । ... अरे कस्मात्पुनरेते दुष्टमधुकरा मामेवाभिद्रवन्ति । ... भवतु ज्ञातम् । यत्तन्मलयवतीबन्धुजनेन जामातुः प्रियवयस्य इति कृत्वा सबहुमानं सुगन्धवर्णकैर्विलिप्तोऽस्मि संतानकुसुमशेखरकं च मम शीर्षे पिनद्धः स खल्वेषोऽत्यादरोऽनर्थीभूतः ।

---

१ इत्थिआवेसं विहिअ । ( स्त्रीवेष विधाय )

तत् किमिदानीमत्र करिष्ये। अथवैतेनैव मलयवतीसकाशाल्लब्धेन रक्तांशुकयुगलेन स्त्रिय इव लम्बं लम्ब परिधायोत्तरीयकृतावगुण्ठनो गमिष्यामि। प्रेक्षे तावत् किं मे दास्याःपुत्रा दुष्टमधुकराः करिष्यन्ति। ] ( तथा करोति )

विटः—( निरूप्य सहर्षम् ) अरे चेढ। ( अङ्गुल्या निर्दिश्य सहासम् ) एसा खु णोमालिआ अहं चिरस्स आअदोत्ति कुविदा अवगुण्ठणं करिअ अण्णदो गच्छदि। ता कण्ठे गेण्हिअ पसादेमि णं। [ अरे चेट... एषा खलु नवमालिका अहं चिरस्यागत इति कुपितावगुण्ठनं कृत्वान्यतो गच्छति। तत् कण्ठे गृहीत्वा प्रसादयाम्येनाम। ] ( सहसोपसृत्य विदूषकं कण्ठे गहीत्वा मुखे ताम्बूलं दातुमिच्छति )

विदूषकः—( मद्यगन्ध सूचयन् नासिकां गृहीत्वा पराङ्मुखः स्थित्वा ) कहं एक्काणं दुट्ठमहुअराणं सआसादो कहं वि परिब्भट्ठो दाणि अण्णस्स दुट्ठमहुअरस्स मुहे पडिदोह्मि। [ कथमेकेषां दुष्टमधुकराणां सकाशात्कथमपि परिभ्रष्ट इदानीमन्यस्य दुष्टमधुकरस्य मुखे पतितोऽस्मि। ]

विटः—कहं कोवेण परंमुहीभूदा। भोदु पाएसु पडिअ पसादेह्मि। ( विदूषकस्य चरणावात्मनः शिरसि कुर्वन् ) पसीद णोमालिए पसीद। [ कथं कोपेन पराङ्मुखीभूता। भवतु पादयोः पतित्वा प्रसादयामि।... प्रसीद नवमालिके प्रसीद। ] ( ततः प्रविशति चेटी )

चेटी—आणत्तम्हि भट्टिदारिआए मलअवदीए जणणीए हञ्जे णोमालिए कुसुमाअरुज्जाणं गदुअ उज्जाणपालिअं पल्लाविअं भणाहि। अज्ज सविसेसं तमालवीहिअं सज्जीकरेहि। मलअवदीसहिदेण जामादुएण तत्थ गन्तव्वंत्ति। आणत्ता अ मए पल्लविआ। ता जाव रअणीविरहवेढिदुक्कण्ठं पिअवल्लहं सेहरअं अण्णेसामि। ( दृष्ट्वा ) एसो सेहरओ। ( सरोषम् ) कहं अण्णं कंपि इत्थिअं पसादेदि। ता इह ठिदा एव्व जाणामि का एसेत्ति। [ आज्ञप्तास्मि भर्तृदारिकया मलयवत्या जनन्या। हञ्जे नवमालिके कुसुमाकरोद्यानं गत्वोद्यानपालिकां पल्लविकां भण। अद्य सविशेषं तमालवीथिकां सज्जीकुरु। मलयवतीसहितेन जामात्रा तत्र गन्तव्यमिति। आज्ञप्ता च मया

---

१ दूर रे दूरम्। ( नासिकां ) पिधाय... २ जणि ( जनितो )।

पल्लविका। तद्यावद् रजनीविरहवर्धितोत्कण्ठं प्रियवल्लभं शेखरकमन्वि-
७५ ष्यामि।... एष शेखरकः।... कथमन्यां कामपि स्त्रियं प्रसादयति। तदिह स्थितैव जानामि कैषेति।]

विटः—

**हरिहरपिदामहाणं पि गव्विदो जो ण जाणइ णमिदुं।**
**सो सेहरओ चलणेसु तुज्झ णोमालिए पडइ॥ ३॥**

[ हरिहरपितामहानामपि गर्वितो यो न जानाति नन्तुम्। स शेखरकश्चरणयोस्तव नवमालिके पतति॥ ] ( इति पादयोः पतति )

**विदूषकः**—दासीएपुत्ता मत्तपालआ कुदो एत्थ णोमालिआ। [ दास्याःपुत्र मत्तपालक कुतोऽत्र नवमालिका। ]

**चेटी**—( निरूप्य सास्मितम् ) कहं अहं ति करिअ मदपरवसेण सेहरएण अज्जअत्तेओ पसादीअदि। ता जाव अलीअं कोवं करिअ दुवेवि एदे परिहसिस्सं। [ कथमहमिति कृत्वा मदपरवशेन शेखरकेणार्यात्रेयः प्रसाद्यते। तद्यावदलीकं कोपं कृत्वा द्वावप्येतौ परिहसिष्यामि। ]

**चेटः**—( नवमालिकां दृष्ट्वा शेखरक हस्तेन चालयन् ) भट्टका मुञ्च एदं। ण भोदि एसा णोमालिआ। एसा उण रोसारत्तेहिं लोअणेहिं पेक्खन्ती आअदा। [ भर्तर्मुञ्चैनम्। न भवत्येषा नवमालिका। एषा पुना रोषारक्तैर्लोचनैः प्रेक्षमाणागता। ]

**चेटी**—( उपसृत्य ) सेहरअ का णु खु एसा पसादीअदि। [ शेखरक का नु खल्वेषा प्रसाद्यते। ]

**विदूषकः**—( अवगुण्ठनमपनीय ) अहं मन्दभाअधेआए पुत्तो। [ अहं मन्दभागधेयायाः पुत्रः। ]

**विटः**—( विदूषकं निरूप्य सरोषमुत्थाय च ) अरे कविलमक्कडअ तुमं पि मं सेहरअं परिहसंसि। अरे चेडा गेण्ह एदं जाव णोमालिअं पसादेमि। [ अरे कपिलमर्कटक त्वमपि मां शेखरकं परिहसासि। अरे चेट गृहाणैनं यावन्नवमालिकां प्रसादयामि। ]

---

१ मत्तवालआ। ( मत्तवालक ) २ पदारोसि। ( प्रतारयसि ) ३ ( मुखे चपेटां दत्वा ) अरे...

चेटः—जं भट्टको आणवेदि । [ यद्भर्ताज्ञापयति । ]

विटः—( विदूषकं मुक्त्वा चेट्याः पादयोः पतन् ) पसीद णोमालिए पसीद । [ प्रसीद नवमालिके प्रसीद । ]

विदूषकः—( आत्मगतम् ) एसो मे अवक्कमिदुं अवसरो । [ एष मेऽपक्रमितुमवसरः । ( पलायितुमीहते )

चेटः—( विदूषकं यज्ञोपवीते गृह्णाति । यज्ञोपवीतं त्रुट्यति ) कहिं कहिं कविलमक्कडअ पलाअसि । [ क्व क्व कपिलमर्कटक पलायसे । ] ( तमुत्तरीयेण कण्ठे बद्ध्वाकर्षति )

विदूषकः—भोदि णोमालिए पसीद मोचेहि मं । [ भवति नवमालिके प्रसीद मोचय माम् । ]

चेटी—( विहस्य ) जइ भूमीए सीसं णिवेसिअ पाएसु मे पडसि । [ यदि भूमौ शीर्षं निवेश्य पादयोर्मे पतसि । ]

विदूषकः—( सरोषम् ) कहं राअमित्तो[1] बह्मणो भविअ दासीए धीआए पाएसु पडिस्सं । [ कथं राजमित्रं ब्राह्मणो भूत्वा दास्याः पुत्र्याः पादयोः पतिष्यामि । ]

चेटी—( अङ्गुल्या तर्जयन्ती सस्मितम् ) दाणिं एव्व पाडइस्सं । सेहरअ उट्ठेहि । पसण्णा दे अहं । ( कण्ठे गृह्णाति ) एसो उण जामादुअस्स पिअवअस्सो बह्मणो तुए खलीकिदो । एदं सुणिअ कदावि भट्टा मित्तावसू तव कुप्पइ । ता आदरेण सम्माणेहि एणं । [ इदानीमेव पातयिष्यामि । शेखरक उत्तिष्ठ । प्रसन्ना तेऽहम् । ... एष पुनर्जामातुः प्रियवयस्यो ब्राह्मणस्त्वया खलीकृतः । एतच्छ्रुत्वा कदाचिद् भर्ता मित्रावसुस्तुभ्यं कुप्यति । तदादरेण संमानयैनम् । ]

विटः—जं णोमालिआ आणवेदि । ( विदूषकं कण्ठे गृहीत्वा ) अज्ज तुमं मए सम्बन्धिओत्ति करिअ परिहसिदो । ( घूर्णन् ) किं सच्चं एव्व सेहरओ मत्तपालआ[2] । [ यन्नवमालिकाज्ञापयति । आर्य... त्वं मया संबन्धीति कृत्वा परिहसितः । किं ...सत्यमेव शेखरको मत्तपालकः । ]

---

१ गन्धव्वराजमित्तो । ( गन्धर्वराजमित्र ) २ मत्तो, किदो परिहासो ( मत्तः, कृतः परिहासः )

विदूषकः—णहि णहि । [ नहि नहि । ]

विटः—ता किद्दो परिहासो । (उत्तरीय पर्तुलीकृत्य विदूषकायासन ददाति) इह उपविसदु संबन्धिओ । [तत् कृतः परिहासः । इहोपविशतु संबन्धी ।]

विदूषकः—( स्वगतम ) दिट्ठिआ अवगदो विअ से मदावेगो [ दिष्ट्यापगत इवास्य मदावेगः । ] ( उपविशति )

विटः—णोमालिए उपविस तुमं पि एदस्स पासे जेण दुवेवि तुम्हे सम एव्व सम्माणेमि । [ नवमालिके उपविश त्वमप्येतस्य पार्श्वे येन द्वावपि युवा सममेव संमानयामि । ( चेटी विटस्योपविशति )

विटः—अरे चेडा सुभरिद सु एद करोहि चसकं अच्छसुराए । [ अरे चेट सुभरित सत्वेतं कुरु चषकमच्छसुरया । ]

( चेटो नाट्येन चषकभरणं करोति )

विटः—(स्वशिरःशेखरात् पुष्पाणि गृहीत्वा चषके विन्यस्य जानुभ्या स्थित्वा नवमालिकायः उवनयन् ) णोमालिए चाक्खअ देहि एदं । [ नवमालिके आस्वाद्य देह्येतम् । ]

चेटी—( सस्मितम् ) जं सेहरओ भणादि । [ यच्छेखरको भणाति । ]

( तथा करोति )

विटः—( विदूषकस्य चषकमर्पयन् ) एद णोमालिआमुहसंसग्गसाविसेसंवासिअरसं सेहरादो अण्णेण केणावि अणासादिदपुव्वं । ता पिब एदं । किं दे अदोवि अवरं सम्माणं करिस्सं । [ इदं नवमालिकामुखसंसर्गसाविशेषवासितरसं शेखरकादन्येन केनाप्यनास्वादितपूर्वम् । तत्पिबैतत् । कं तेऽतोप्यपरं संमानं करिष्यामि । ]

विदूषकः—( सविलक्षस्मितं कृत्वा ) सेहरक वह्मणो खु अहं । [ शेखरक ब्राह्मणः खल्वहम् । ]

विटः—जइ तुमं वह्मणो ता कहिं दे वह्मसुत्तं । [ यदि त्वं ब्राह्मणस्तत् क ते ब्रह्मसूत्रम् । ]

विदूषकः—तं खु मे इमिणा चेडेण आअड्ढिअमाणं छिण्णं । [ तत्खल्वनेन चेटेनाकृष्यमाणं छिन्नम् । ]

---

१ एदं एतस्स । ( एतदेतस्मै । ) २ संसग्गवड्ढिअरसं । ( ससर्गवर्धितरस )

चेटी—( विहस्य ) जइ एव्व ता वेट्टक्खराइंपि दाव कतिवि उदाहर । [ यद्येवं तद्वेष्टाक्षराण्यपि कत्यप्युदाहर । ]

विदूषकः—भोदि इमिणा सीधुगन्धेण पिणद्धाइं मे वेट्टक्खराइं । अहवा कि मम भोदीए समं विवादेण । एसो दे बम्हणो पाएसु पडदि । [भवति अनेन सीधुगन्धेन पिनद्धानि मे वेष्टाक्षराणि । अथवा किं मम भवत्या सह विवादेन । एष ते ब्राह्मण पादयोः पतति । ]

( इति पादयो. पतितुमिच्छति )

चेटी—( हस्ताभ्या निवार्य ) मा खु एव्वं करेदु अज्जो । सेहरअ सच्चं बह्मणो खु एसो । ( विदूषकस्य पादयोः पतति ) अज्ज ण तुए कुपिदव्वं । सम्बन्धिआणुरूवो खु एसो मए परिहासो किदो । [ मा खल्वेवं करोत्वार्यः । शेखरक सत्यं ब्राह्मणः खल्वेषः । ... आर्य न त्वया कोपितव्यम् । संबन्धिकानुरूपः खल्वेष मया परिहासः कृतः । ]

विटः—अहं पि एणं पसादेमि । ( पादयोर्निपत्य ) मरिसेदु मरिसदु अज्जो जं मए मदपरवसेण अवरुद्धं । जेण अहं णोमालिआए सह आवाणअं गमिस्सं । [ अहमप्येनं प्रसादयामि । .. मर्षयतु मर्षयत्वार्यो यन्मया मदपरवशेनापराद्धम् । येनाहं नवमालिकया सहापानकं गमिष्यामि । ]

विदूषकः—मरिसिदं मए सव्वं । गच्छ । जाव अहंपि पिअवअस्सं पेक्खामि । [ मर्षितं मया सर्वम् । गच्छ । यावदहमपि प्रियवयस्यं प्रेक्षे । ]

( निष्क्रान्तो विटश्चेट्या सह चेटश्च )

विदूषकः—दिट्ठिआ अदिक्कन्तो बम्हणस्स अकालमिच्चू । ता जाव अहंपि मत्तपालअजणसङ्गदूसिदो इह दिग्घिकाए ण्हाइअ पेक्खामि पिअवअस्सं । ( तथा करोति ) ( नेपथ्याभिमुखमवलोक्य ) एसो पिअवअस्सो-वि रुविणीं विअ वैरलच्छीं मलअवदीं हत्थे अवलम्बिअ इदो एव्व आअच्छदि । तो इह एव्व चिट्ठिस्सं । [दिष्ट्यातिक्रान्तो ब्राह्मणस्याकालमृत्युः । तद्यावदहमपि मत्तपालकजनसंगदूषित इह दीर्घिकायां स्नात्वा प्रेक्षे प्रिय-

१ णट्ठाणि । ( नष्टानि ) २ रुक्मिणीं विअ हरी । ( रुक्मिणीमिव हरिः ) ३ सअवर ( स्वयवर ) । ४ ता जाव गदुअ से पासपरिवत्ती होमि । ( तद्यावद्गत्वास्य पार्श्वपरिवर्ती भवामि )

वयस्यम् । ... एष प्रियवयस्योऽपि रूपिणीमिव वरलक्ष्मीं मलयवतीं हस्तेऽवलम्ब्येत एवागच्छति । तदिहैव स्थास्यामि । ]

१०२ ( ततः प्रविशति गृहीतवरनेपथ्यो नायको मलयवती विभवतश्च परिवारः )

नायकः—

दृष्टा दृष्टिमधो ददाति कुरुते नालापमाभाषिता
शय्यायां परिवृत्य तिष्ठति बलादालिङ्गिता वेपते ।
निर्यान्तीषु सखीषु वासभवनान्निर्गन्तुमेवेहते
जाता वामतयैव मेऽद्य सुतरां प्रीत्यै नवोढा प्रिया ॥ ४ ॥

( मलयवतीमवलोक्य ) प्रिये मलयवति

हुंकारं ददता मया प्रतिवचो यन्मौनमासेवितं
यद्भावानलदीप्तिभिस्तनुरियं चन्द्रातपैस्तापिता ।
ध्यातं यच्च बहून्यनन्यमनसा नक्तंदिनानि प्रिये
तस्यैतत्तपसः फलं मुखमिदं पश्यामि यत्तेऽधुना ॥ ५ ॥

नायिका—( अपवार्य ) हञ्जे चउरिए ण केवलं दंसणीओ पिअंपि भणिदुं जाणादि । [ हञ्जे चतुरिके न केवलं दर्शनीयः प्रियमपि भणितुं जानाति । ]

चेटी—( विहस्य ) अयि पडिपक्खवादिणि सच्चकं जेव्व एदं । किं एत्थ पिअवअणं । [ अयि प्रतिपक्षवादिनि सत्यमेवैतत् । किमत्र प्रियवचनम् । ]

नायकः—चतुरिके आदेशय मार्गं कुसुमाकरोद्यानस्य ।

चेटी—एदु एदु भट्टा । [ एत्वेतु भर्ता । ]

नायकः—(परिक्रामन् नायिकां निर्दिश्य ) स्वैरं स्वैरमागच्छतु भवती ।

खेदाय स्तनभार एष किमु ते मध्यस्य हारोऽपर-
स्ताम्यत्यूरुयुगं नितम्बभरतः काञ्च्यानया किं पुनः ।
शक्तिः पादयुगस्य नोरुयुगलं वोढुं कुतो नूपुरौ
स्वाङ्गैरेव विभूषितासि वहसि क्लेशाय किं मण्डनम् ॥ ६ ॥

---

१ विवाहवेषालङ्कृतो । २ हुंकारैर्ददता । ३ श्राम्यति ।

चेटी—एदं तं कुसुमाअरुज्जाणं। ता पविसदु भट्टा। [ एतत्तत् कुसुमाकरोद्यानम्। तत्प्रविशतु भर्ता। ] ( सर्वे प्रविशन्ति )

३ नायकः—( विलोक्य ) अहो नु कुसुमाकरोद्यानस्य परा श्रीः। इह हि

निष्यन्दश्चन्दनानां शिशिरयति लतामण्डपे कुट्टिमान्ता—
नारा द्धारागृहाणां ध्वनिमनु कुरुते ताण्डवं नीलकण्ठः।
यन्त्रोन्मुक्तश्च वेगाच्चलति विटपिनां पूरयन्नालवाला-
नापातोत्पीडहेलाहृतकुसुमरजःपिञ्जरोऽयं जलौघः ॥ ७ ॥

अपि च

अमी गीतारम्भैर्मुखरितलतामण्डपभुवः
परागैः पुष्पाणां प्रकटपटवासव्यतिकराः।
पिबन्तः पर्याप्तं सह सहचरीभिर्मधुरसं
समन्तादापानोत्सवमनुभवन्तीव मधुपाः ॥ ८ ॥

विदूषकः—( उपसृत्य ) जेदु जेदु भवं। सोत्थि गोट्ठीए। [ जयतु जयतु भवान्। स्वस्ति भवत्यै। ]

३ नायकः—वयस्य चिरादागतोऽसि।

विदूषकः—भो वअस्स लहु एव्व आअदोह्मि। किं उण विवाहमहूस्सवमिलिदसिद्धविज्जाहराणं आपाणअदंसणकोदूहलेण परिब्भमन्तो एत्तिअं
६ वेलं विलंबिदोह्मि। ता पिअवअस्सोवि दाव एदं पेक्खदु। [ भो वयस्य लघ्वेवागतोऽस्मि। किं पुनर्विवाहमहोत्सवामिलितसिद्धविद्याधराणामापानकदर्शनकौतूहलेन परिभ्रमन्नेतावतीं वेलां विलम्बितोऽस्मि। तत्प्रियवय-
५ स्योऽपि तावदेतत्पश्यतु।

नायक—यथाह भवान्। ( समन्तादवलोकयन् ) वयस्य पश्य पश्य।

दिग्धाङ्गा हरिचन्दनेन दधतः सन्तानकानां स्रजो
माणिक्याभरणप्रभाव्यतिकरैश्चित्रीकृताच्छांशुकाः।
सार्धं सिद्धजनैर्मधूनि दयितापीतावशिष्टान्यमी
मिश्रीभूय पिबन्ति चन्दनतरुच्छायासु विद्याधराः ॥ ९ ॥

---

१ लतामण्डपं कुट्टिमानां। २ तार...तनुते ताण्डवं। ३ हृत। ४ भवन्तीह। ५ ण लक्खिदो ( न लक्षित. ) ६ स्निग्धाङ्गा।

तदेहि वयमपि तमालवीथिं गच्छामः । ( सर्वे परिक्रामन्ति )

विदूषकः—एसा खु तमालवीहिआ । एदं चन्दनलदामण्डवं । एदं च सरदादवपरिखेदिअं विअ तत्तहोदीए वदणं लक्खीअदि । ता इह फलिहसिलाअले उवविसदु । [ एषा खलु तमालवीथिका । एतच्चन्दनलतामण्डपम् । एतच्च शरदातपपरिखेदितमिव तत्रभवत्या वदनं लक्ष्यते । तदिह स्फटिकशिलातल उपविशतु । ]

नायकः—वयस्य सम्यगुपलक्षितम् ।

**एतन्मुखं प्रियायाः शशिनं जित्वा कपोलयोः कान्त्या ।**
**तापानुरक्तमधुना कमलं ध्रुवमीहते जेतुम् ॥ १० ॥**

( नायिकां हस्ते गृहीत्वा ) प्रिये इहोपविशामः । ( सर्वे उपविशन्ति )

—( नायिकाया मुखमुन्नमय्य पश्यन् । ) प्रिये वृथैव त्वमस्माभिः कुसुमाकरोद्यानदर्शनकुतूहलिभिः खेदितासि । कुतः

**एतत्ते भ्रूलतोद्भासि पाटलाधरपल्लवम् ।**
**मुखं नन्दनमुद्यानमतोऽन्यत् केवलं वनम् ॥ ११ ॥**

चेटी—( सस्मित विदूषकं निर्दिश्य ) सुदं तुए भट्टिदारिआ कहं वण्णीअदि । [ श्रुतं त्वया भर्तृदारिका कथं वर्ण्यते । ]

विदूषकः—चतुरिए मा एव्वं गव्वमुव्वह । अह्माणं पि मज्झे दंसणीओ जणो अत्थि एव्व । केवलं मस्सरेण कोवि ण वण्णेदि । [ चतुरिके मैवं गर्वमुद्वह । अस्माकमपि मध्ये दर्शनीयो जनोऽस्त्येव । केवलं मत्सरेण कोऽपि न वर्णयति । ]

चेटी—( सस्मितम् ) अज्ज अहं तुमं वण्णेमि । [ आर्य अहं त्वां वर्णयामि । ]

विदूषकः—( सहर्षम् ) जीवाविदोम्हि । ता करेदु भोदी पसादं । जेण एसो मं पुणोवि ण भणादि जहा तुमं ईदिसो तादिसो कविलमक्कडाआरोत्ति । [ जीवापितोऽस्मि । तत्करोतु भवती प्रसादम् । येनैष मां पुनरपि न भणति यथा त्वमीदृशः तादृशः कपिलमर्कटाकार इति । ]

---

१ संचरन्ती दाव परिखेदिदा । विअ भोदी । ( सचरन्ती तावत् परिखेदितेव भवती ) २ क्षिप्त्वा । ३ तापाभिताम्र ।

चेटी—अज्ज तुम मए विवाहजागरणे णिद्दाअमाणो णिमीलिअअक्खो सोहणो दिट्ठो। ता तह एव्व चिट्ठ जेण वण्णेमि। [ आर्य त्वं मया विवाहजागरणे निद्रायमाणो निमीलिताक्षः शोभनो दृष्ट । तत्तथैव तिष्ठ येन वर्णयामि । ]

( विदूषकस्तथा करोति )

चेटी—( स्वगतम् ) जाव एसो णिमीलिअअक्खो चिट्ठदि ताव णीलरसाणुआरिणा तमालपल्लवरसेण मुहं से कालीकरिस्सं। [ यावदेष निमीलिताक्षस्तिष्ठति तावन्नीलरसानुकारिणा तमालपल्लवरसेन मुखमस्य कालीकरिष्यामि । ] ( उत्थाय तमालपल्लवग्रहणं कृत्वा तन्निष्पीडनं नाटयति )

( नायको नायिका च विदूषकं पश्यतः )

नायकः—वयस्य धन्यः खल्वसि । योऽस्मासु तिष्ठत्सु त्वमेव वर्ण्यसे ।

( चेटी तमालपल्लवस्य रसेन विदूषकस्य मुखं नाट्येन कालीकरोति )

(नायिका सस्मितं विदूषकं दृष्ट्वा नायकं पश्यति )

नायकः—( नायिकामुखं दृष्ट्वा )

स्मितपुष्पोद्गमोऽयं ते दृश्यतेऽधरपल्लवे।
फलं त्वन्यत्र मुग्धाक्षि चक्षुषोर्मम पश्यतः ॥ १२ ॥

विदूषकः—भोदि किं तुए किदं। [ भवति किं त्वया कृतम् । ]

चेटी—णं वण्णिदोसि । [ ननु वर्णितोऽसि । ]

विदूषकः—(हस्तेन मुखं प्रमृज्य हस्तं दृष्ट्वा सरोषं दण्डकाष्ठमुद्यम्य) आ दासीए धीए राअउलं खु एदं। किं तव एत्थ करइस्सं। (नायकं निर्दिश्य) भो तुम्हाणं पुरदो एव्व अहं दासीए धीआए खलीकिदो। ता किं मम इह ट्ठिदेण। अण्णदो गमिस्सं दाव। [ आः दास्याःपुत्रि राजकुलं खल्वेतत् । किं तवात्र करिष्यामि । . .भोः युष्माकं पुरतोऽहं दास्याःपुत्र्या खलीकृतः । तत् किं ममेह स्थितेन । अन्यतो गमिष्यामि तावत् । ]

( निष्क्रामति )

चेटी—कुविदो मे अज्जअत्तेओ । जाव अणुगदुअ पसादइस्सं । [कुपितो म आर्यात्रेय. । तावदनुगम्य प्रसादयिष्यामि । ] (गन्तुमिच्छति)

नायिका—हञ्जे चउरिए कहं मं एआइणि उज्झिअ गच्छसि । [ हञ्जे चतुरिके कथं मामेकाकिनीमुज्झित्वा गच्छसि । ]

---

१ स्मितं । २ पल्लवः । ३ तु जातं । तुजातं ।

चेटी—( नायक निर्दिश्य सस्मितम् ) एव्वं एआइणी चिरं होहि।
१५ [ एवमेकाकिनी चिरं भव । ] ( इति निष्क्रान्ता )

नायकः—( नायिकाया मुख पश्यन् )

दिनकरकरामृष्टं बिभ्रत् द्युतिं परिपाटलां
दशनकिरणैरुत्सर्पद्भिः स्फुटीकृतकेसरम् ।
अयि मुखमिदं मुग्धे सत्यं समं कमलेन ते
मधु मधुकरः किं त्वेतस्मिन् पिबन्न विभाव्यते ॥ १३ ।

( नायिका विहस्य मुखमन्यतो नयति ) ( नायकस्तदेव पठति )
( प्रविश्य पटाक्षेपेण )

३ चेटी—( उपसृत्य ) एसो खु अज्जमित्तावसू कज्जेण केणावि कुमारं पेक्खिदुं आअदो । [ एष खलु आर्यमित्रावसुः कार्येण केनापि कुमारं प्रेक्षितुमागतः। ]

६ नायकः—प्रिये गच्छ त्वमात्मनो गृहम् । अहमपि मित्रावसु दृष्ट्वा त्वरितमागत एव । (नायिका चेट्या सह निष्क्रान्ता) (ततः प्रविशति मित्रावसुः)

मित्रावसुः—

अनिहत्य तं सपत्नं कथमिव जीमूतवाहनस्याहम् ।
कथयिष्यामि हृतं तव राज्यं रिपुणेति निर्लज्जः ॥ १४ ॥

अनिवेद्य च न युक्तं गन्तुमिति निवेद्य गच्छामि । ( उपसर्पति )

नायकः—मित्रावसो इत आस्यताम् । ( मित्रावसुरुपविशति )

नायकः—( निरूप्य ) मित्रावसो संरब्ध इव लक्ष्यसे ।

मित्रावसुः—कः खलु मतङ्गहतके संरम्भः ।

६ नायकः—किं कृतं मतङ्गेन ।

मित्रावसुः—स्वनाशाय किल युष्मदीयं राज्यमाक्रान्तम् ।

नायकः—( सहर्षमात्मगतम् ) अपि नाम सत्यमेतत् स्यात् ।

९ मित्रावसुः—अतस्तदुच्छित्तय आज्ञां दातुमर्हति कुमारः । किंबहुना

---

१ क-रमृष्टं । २ दशनाकिरणैः ससर्पद्भिः । ३ वैतस्मिन् । नैतस्मिन्। ४ कुमार । समर्थः । ६ ससंरम्भ।

संसर्पद्भिः समन्तात् कृतसकलवियन्मार्गयानैर्विमानैः
कुर्वाणाः प्रावृषीव स्थगितरविरुचः श्यामतां वासरस्य ।
एते याताश्च सद्यस्तव वचनमितः प्राप्य युद्धाय सिद्धाः
सिद्धं चोद्वृत्तशत्रुक्षयभयविनमद्राजकं ते स्वराज्यम् ॥ १५ ॥

अथवा किं बलौघैः ।

एकाकिनापि हि मया रभसावकृष्ट-
निस्त्रिंशदीधितिसटाभरभासुरेण ।
आराज्निपत्य हरिणेव मतङ्गजेन्द्र-
माजौ मतङ्गहतकं हतमेव विद्धि ॥ १६ ॥

नायकः—( आत्मगतम् । कर्णौ पिधाय ) अहह दारुणमभिहितम् । *अथवैवं तावत् । ( प्रकाशम् ) मित्रावसो क्रियतेतत् । बहुतमतोऽपि*
२ बाहुशालिनि त्वयि संभाव्यते । किंतु

स्वशरीरमपि परार्थे यः खलु दद्यादयाचितः कृपया ।
राज्यस्य कृते स कथं प्राणिवधक्रौर्यमनुमन्ये ॥ १७ ॥

अपि च क्लेशान्विहाय मम शत्रुबुद्धिरेव नान्यत्र । यदि त्वमस्मत्प्रियं कर्तुमीहसे तदनुकम्प्यतामसौ राज्यस्य कृते क्लेशदासीकृतो तपस्वी ।
३ मित्रावसुः—( सामर्षं सहासं च ) कथं नानुकम्प्यत ईदृशोऽस्माकमुपकारी कृतेशश्च ।

नायकः—( स्वगतम् ) प्रत्यग्रकोपाक्षिप्तचेता न तावदयं शक्यते
६ निवर्तयितुम् । तदेवं तावत् । ( प्रकाशम् ) मित्रावसो उत्तिष्ठ अभ्यन्तरमेव प्रविशाव । तत्रैव तावत् त्वां बोधयिष्यामि । संप्रति परिणतमहः । तथाहि

निद्रामुद्रावबन्धव्यतिकरमनिशं पद्मकोशादपास्य-
न्नाशापूरैककर्मप्रवणनिजकरप्रीणिताशेषविश्वः ।
दृष्टः सिद्धैः प्रसक्तस्तुतिमुखरमुखैरस्तमप्येष गच्छ-
न्नेकः श्लाघ्यो विवस्वान् परहितकरणायैव यस्य प्रयासः ॥ १८ ॥

( इति निष्क्रान्ताः सर्वे )

इति तृतीयोऽङ्कः ।

---

१ मध्य । २ क्षण । ३ अद्रेः । ४ मनुते । ५ रूपणः । ६ प्रबन्धात् । मुद्रावबन्धान्मधुकर ..। ७ प्रीणित । ८ प्रयुक्त । ९ प्रसाद. । प्रवासः ।

# चतुर्थोऽङ्कः ।

( ततः प्रविशति कञ्चुकी गृहीतरक्तवस्त्रयुगलः प्रतीहारश्च )

कञ्चुकी[1]—

अन्तःपुराणां विहितव्यवस्थः पदे पदेऽहं स्खलितानि रक्षन् ।
जरातुरः संप्रति दण्डनीत्या सर्वं[2] नृपस्यानुकरोमि वृत्तम् ॥ १ ॥

प्रतीहारः—आर्य वसुभद्र क्व नु खलु भवान् प्रस्थितः ।

कञ्चुकी—आदिष्टोऽस्मि देव्या मित्रावसुजनन्या । यथा कञ्चुकिन्त्वया दशरात्रं यावन्मलयवत्या जामातुश्च रक्तवासांसि नेतव्यानीति । राजदुहिता मलयवती च श्वशुरकुले वर्तते । जीमूतवाहनोऽपि युवराजेन मित्रावसुना सह समुद्रवेलां द्रष्टुमद्य गत इति मया श्रुतम् । तन्न जाने किं राजपुत्र्याः सकाशं गच्छाम्युनाहो जामातुरिति ।

प्रतीहारः—आर्य वरं राजपुत्र्याः सकाशं गन्तव्यम् । तत्र हि कदाचिदस्यां वेलायां जामाता प्रत्यागतो भविष्यति ।

कञ्चुकी—सुनन्द साधूक्तम् । अथ भवान् पुनः क्व प्रस्थितः ।

प्रतीहारः—अहमपि महाराजविश्वावसुना समादिष्टः । यथा सुनन्द गच्छ मित्रावसुं ब्रूहि । अस्मिन् दीपप्रतिपदुत्सवे मलयवत्या जामातुश्च उत्सवानुरूपं यत्किंचित्प्रदीयते । तदागत्य निरूप्यतामिति[3] । तद्गच्छतु राजपुत्र्याः सकाशमार्यः । अहमपि युवराजमित्रावसोराह्वानाय[4] गच्छामि । ( इति निष्क्रान्तौ ) विष्कम्भकः ।

( ततः प्रविशति नायको मित्रावसुश्च )

नायकः—

शय्या शाद्वलमासनं शुचिशिला सद्म द्रुमाणामधः
शीतं निर्झरवारि पानमशनं कन्दाः सहाया मृगाः ।
इत्यप्रार्थितलभ्यसर्वविभवे दोषोऽयमेको वने
दुष्प्रापार्थिनि यत् परार्थघटनावन्ध्यैर्वृथा स्थीयते ॥ २ ॥

---

१ काञ्चुकीयो । २ सर्वां...वृत्तिम् । ३ चिन्त्यताम् । ४ मित्रावसोरानयनाय ।

मित्रावसुः—(ऊर्ध्वमवलोक्य) कुमार त्वर्यतां समयोऽयं चलितुमम्बुराशेः।

नायकः—( आकर्ण्य ) सम्यगुपलक्षितम् ।

उन्मज्जज्जलकुञ्जरेन्द्ररभसास्फालानुबन्धोद्धतः
सर्वाः पर्वतकन्दरोदरभुवः कुर्वन् प्रतिध्वानिनीः ।
उच्चैरुच्चरति ध्वनिः श्रुतिपथोन्माथी यथायं तथा
प्रायः प्रेङ्खदसंख्यशङ्खधवला वेलेयमागच्छति ॥ ३ ॥

मित्रावसुः—नन्वियमागतैव । पश्य

कवलितलवङ्गपल्लवकरिमकरोद्गारसुरभिणा पयसा ।
एषा समुद्रवेला रत्नद्युतिरञ्जिता भाति ॥ ४ ॥

तदेह्यस्माज्जलप्रसरणमार्गादपक्रम्यानेनैव गिरिसानुसमीपमार्गेण परिक्रमावः।

नायकः—मित्रावसो पश्य पश्य शरत्समयपाण्डुभिः पयोदपटलैः प्रावृताः प्रालेयाचलशिखरश्रियमुद्वहन्त्येते मलयसानवः ।

मित्रावसुः—नैवामी मलयसानवः । नागानामस्थिसंघाताः खल्वेते ।

नायकः—( सोद्वेगम् ) कष्टं किंनिमित्तममी संघातमृत्यवो जाताः ।

मित्रावसुः—कुमार नैवामी संघातमृत्यवः । श्रूयतां यथैतत् । पुरा किल स्वपक्षपवनापास्तसमस्तसागरजलैस्तरसा रसातलादुद्धृत्य भुजंगमाननुदिनमाहारयति स्म वैनतेयः ।

नायकः—( सोद्वेगम् ) कष्टमतिदुष्करं करोति । ततस्ततः ।

मित्रावसुः—ततः सकलनागलोकविनाशशङ्किना नागराजेन वासुकिना गरुत्मानभिहितः ।

नायकः—( सादरम् ) किं मां प्रथमं भक्षयेति ।

मित्रावसुः—नहि नहि ।

नायकः—किमन्यत् ।

मित्रावसुः—इदमभिहितम् । गरुत्मन् त्वदभिपातसंत्रासात् सहस्रशः स्रवन्ति भुजगमाङ्गनानां गर्भाः । शिशवश्च पञ्चत्वमुपयान्ति । एवं च

---

१ उद्गर्जत् । २ बद्धोद्धतः । ३ ध्वानिताः । ४ वलया । ५ तलपूरं । ६ प्रतिदिनमेकैकं नागमाहारयति ।

[१] संततिसमुच्छेदादस्माकं तवैव स्वार्थहानिर्भवेद् यदर्थमाभिपतति भवान् पातालम्। तदेकैकं भुजंगमानामनुदिवसं समुद्रतटस्थितस्याहमेव प्रेषयामि।

नायकः—कष्टमेवं रक्षिता नागराजेन पन्नगाः ।

जिह्वासहस्राद्वितयस्य मध्ये नैकापि सा तस्य किमस्ति जिह्वा ।
एषोऽहिरक्षार्थमहिद्विषेऽद्य दत्तो मयात्मेति यया ब्रवीति ॥ ५ ॥

मित्रावसुः—प्रतिपन्नं तत् पक्षिराजेन ।

इत्येवं भोगिपतिना विहितव्यवस्थो
यान् भक्षयत्यहिपतीनिह पक्षिराजः ।
यास्यन्ति यान्ति च गताश्च दिनैर्विवृद्धिं
तेषाममी तुहिनशैलरुचोऽस्थिकूटाः ॥ ६ ॥

नायकः—आश्चर्यमाश्चर्यम् ।

सर्वाशुचिनिधानस्य जरत्तृणलघीयसः ।
शरीरकस्यापि कृते मूढाः पापानि कुर्वते ॥ ७ ॥

[८] कथमपर्यवसानेयं विपत्तिर्नागानामापतिता। (आत्मगतम्) अपि शक्नुयामहं स्वशरीरसमर्पणेन एकस्यापि नागस्य परिरक्षां कर्तुम् ।

( ततः प्रविशति प्रतीहारः )

प्रतीहारः—आरूढोऽस्मि गिरिशिखरम् । यावन्मित्रावसुमन्विष्यामि । ( विलोक्य ) अयं मित्रावसुर्जामातुः समीपे तिष्ठति । ( उपसृत्य ) विजयेता कुमारौ ।

मित्रावसुः—सुनन्द किंनिमित्तमिहागमनम् ।

प्रतीहारः—( कर्णे ) एवम् ।

मित्रावसुः—कुमार तातो मामाह्वयति ।

नायकः—गम्यताम् ।

---

१ सततिविच्छेदोऽस्माकम् । तव चैवं स्वार्थहानिः । तद्यदर्थमभिपतति भवान्नागलोकं तं नागमेकैकमनुदिनं समुद्रतटस्थितस्य ते प्रेषयामि । २ किं तादृग्भूद्रसज्ञा । ३ एकाहि । ४ द्विषो । ५ इत्येकशः प्रतिदिनं । ६ पतन्पतगाधिराजः। ७ कृतघ्नस्य विनाशिनः। ८ कष्टपर्यवसानेयं ।

मित्रावसुः—कुमारेणापि बहुप्रत्यवायेऽस्मिन् प्रदेशे कुतूहलिना न चिरं स्थातव्यम् । ( इति प्रतीहारेण सह निष्क्रान्तः )

नायकः—यावदहमप्यस्माद्गिरिशिखरादवतीर्य समुद्रतटमवलोकयामि । ( परिक्रामति )

(नेपथ्ये)

हा पुत्तअ सङ्खचूड कहं वावादिअमाणो अज्ज किल तुमं मए पेक्खिदव्वो । [ हा पुत्रक शङ्खचूड कथं व्यापाद्यमानोऽद्य किल त्वं मया प्रेक्षितव्यः । ]

नायकः—( आकर्ण्य ) अये योषित इवार्तप्रलापः । तद्यावदुपसृत्य केयं कुतो वास्या भयमिति स्फुटीकरोमि । ( परिक्रामति )

( ततः प्रविशति क्रन्दन्त्या वृद्धयानुगम्यमानः शङ्खचूडो गोपायित-वस्त्रयुगलश्च किंकरः )

वृद्धा—( सास्रम् ) हा पुत्तअ सङ्खचूड कहं वावादिअमाणो अज्ज किल तुमं मए पेक्खिदव्वो । ( चिबुके गृहीत्वा ) इमिणा दे मुहचन्देण विरहिअं दाणिं अन्धआरीभविस्सदि पाआल । [ हा पुत्रक शङ्खचूड कथं व्यापाद्यमानोऽद्य किल त्वं मया प्रेक्षितव्यः । ... अनेन ते मुखचन्द्रेण विरहितमिदानीमन्धःकारीभविष्यति पातालम् । ]

शङ्खचूडः—अम्ब किमिति वैक्लव्येन सुतरामात्मानं पीडयसि ।

वृद्धा—( निर्वर्ण्य पुत्रस्याङ्गानि स्पृशन्ती ) हा पुत्तअ कहं दे अदिट्ठसूर-किरणं सुउमारसरीरं णिग्घिणहिअओ गरुडो आहारइस्सदि । [ हा पुत्र कथं तेऽदृष्टसूर्यकिरणं सुकुमारशरीरं निर्घृणहृदयो गरुड आहारयिष्यति ।] ( कण्ठे गृहीत्वा रोदिति )

शङ्खचूडः—अम्ब अलं परिदेवितेन । पश्य

**क्रोडीकरोति प्रथमं यदा जातमनित्यता ।**
**धात्रीव जननी पश्चात्तदा शोकस्य कः क्रमः ॥ ८ ॥** (गन्तुमिच्छति)

वृद्धा—पुत्तअ चिट्ठ मुहुत्तअं । दाव दे वअणं पेक्खामि । [ पुत्रक तिष्ठ मुहूर्तम् यावत्ते वदनं प्रेक्षे । ]

---

१ मज्झ हिअअं अन्धआरीभविस्सदि पाआलं पि । (मम हृदयमन्धकारीभविष्यति पातालमपि । ) २ अतिविक्लवा । ३ जात नित्य ।

किङ्करः—एहि कुमाल । किं ते एदाए भणन्तीए । पुत्तसिणेहमोहिदा क्खु एसा लाअकज्जं ण जाणादि । [ एहि कुमार । किं त एतया भणन्त्या । पुत्रस्नेहमोहिता खल्वेषा राजकार्यं न जानाति । ]

शङ्खचूडः—अयमागच्छामि ।

किङ्करः—( आत्मगतम् । अग्रतोऽवलोक्य ) आणीदो खु एसो मए वज्झसिलासमीवं । जाव एदं वज्झचिण्हं लत्तंसुअजुअलं देइअ वज्झसिलं दंसेमि । [ आनीतः खल्वेष मया वध्याशिलासमीपम् । यावदेतद्वध्यचिह्नं रक्तांशुकयुगलं दत्वा वध्याशिलां दर्शयामि । ]

नायकः—अये इयमसौ योषित् । ( शङ्खचूडं दृष्ट्वा ) नूनमनेनास्याः सुतेन भवितव्यं यदर्थमाक्रन्दति । ( समन्तादवलोक्य ) न खल्वस्या भयकारणं किंचित्पश्यामि । कुतोऽस्या भयं भविष्यति । किमुपसृत्य पृच्छामि । अथवा प्रसक्त एवायमेतेषामालापः । कदाचिदत एवास्याभिव्यक्तिर्भविष्यति । तद्विटपान्तरितस्तावच्छृणोमि ।

( तथा करोति )

किङ्करः—( सास्रं कृताञ्जलिः ) कुमाल सङ्खचूड एसो सामिणो आदेसोत्ति करिअ ईदिसं णिट्ठरं मन्तीअदि । [ कुमार शङ्खचूड एष स्वामिन आदेश इति कृत्वेदृशं निष्ठुरं मन्त्र्यते । ]

शङ्खचूडः—भद्र कथय ।

किङ्करः—णागलोअसामी वासुई दे आणवेदि । [ नागलोकस्वामी वासुकिस्त आज्ञापयति । ]

शङ्खचूडः—( शिरस्यञ्जलिं बद्ध्वा सादरम् ) किमाज्ञापयति स्वामी ।

किङ्करः—एदं लत्तंसुअजुअलं परिहाय आलुह वज्झसिलं । जेण तुमं लत्तंसुअचिण्णोवलक्खिदं गरुडो गेह्णिअ ओहालं करिस्सदित्ति।[१] [ इदं रक्तांशुकयुगलं परिधायारोह वध्यशिलाम् । येन त्वां रक्तांशुकचिन्होपलक्षितं गरुडो गृहीत्वाहारं करिष्यतीति । ]

नायकः—( सास्रम् ) कष्टमयमसौ तपस्वी वासुकिना परित्यक्तो गरुत्मत आहाराय दत्तः ।

किङ्करः—सङ्खचूड गेण्ह एदं । [शङ्खचूड गृहाणैतत्] (वस्त्रयुगलमर्पयति)

---

१ आहालकलणाय णइस्सदि । ( आहारकरणाय नेष्यति । )

शङ्खचूडः—( सादरम् ) उपनय । ( गृहीत्वा ) गृहीतः शिरसि स्वाम्यादेशः ।

वृद्धा—( पुत्रस्य हस्ते वाससी दृष्ट्वा सोरस्ताडम् ) हा वच्छ एदं गुं वज्जपा-
३३ डसण्णिभं सम्भावीअदि । [ हा वत्स इदं खलु वज्रपातसंनिभं संभाव्यते।]

किङ्करः—आसण्णा खु गरुडस्स आअमणवेला । ता लहु अवक्कमामि ।
[आसन्ना खलु गरुडस्यागमनवेला तल्लघ्वपक्रामामि । ] ( इति निष्क्रान्तः )

३६ शङ्खचूडः—अम्ब समाश्वसिहि समाश्वसिहि ।

वृद्धा—( समाश्वस्य सास्रम् ) हा जाद हा पुत्तअ हा मनोरहसतलद्ध
कहिं तुमं पुणो पेक्खिस्सं । [ हा जात हा पुत्रक हा मनोरथशतलब्ध
३९ कुत्र त्वां पुनः प्रेक्षिष्ये । ] ( कण्ठे गृहीत्वा रोदिति )

नायकः—अहो नैर्घृण्यं गरुत्मतः । अपि च

मूढाया मुहुरश्रुसंततिमुचः कृत्वा प्रलापान् बहून्
कस्त्राता तव पुत्रकेति कृपणं दिक्षु क्षिपन्त्या दृशम् ।
अङ्के मातुरुपागतं शिशुमिमं त्यक्त्वा घृणामश्नत-
श्चञ्चुर्नैव खगाधिपस्य हृदयं वज्रेण मन्ये कृतम् ॥ ९ ॥

शङ्खचूडः—( मातुरश्रूणि मार्जयन् ) अम्ब किमातिवैक्लव्येन ।

यैरत्यन्तदयापरैर्न विहिता वन्ध्यार्थिनां प्रार्थना
यैः कारुण्यपरिग्रहान्न गणितः स्वार्थः परार्थं प्रति ।
ये नित्यं परदुःखदुःखितधियस्ते साधवोऽस्तं गता
मातः संहर बाष्पवेगमधुना कस्याग्रतो रुद्यते ॥ १० ॥

ननु समाश्वसिहि समाश्वसिहि ।

२ वृद्धा—( सास्रम् ) पुत्तअ कह समस्ससिमि । किं एक्को एव्वपुत्तओत्ति

---

१ ( इति गृहीत्वा शिरसि स्वाम्यादेशमर्पयति ) २ ; त वज्झाचिण्हवसणं जेण भाएदि मे हिअअं । ( तद्वध्याचिन्हवसन येन बिभेति मे हृदयम् । ) ३ हा भत्त हा विणअसाअर कहिं दे उण ईदिसं पुण्णिमाचन्दसारिच्छं मुहं पेक्खिस्सं । (हा भक्त हा विनयसागर क्व ते पुनरीदृशं पूर्णिमाचन्द्रसदृशं मुखं प्रेक्षिष्ये। ) ४ मम । ५ कृपणां ६ रुपाश्रित, स्वस्थित । ७ चञ्चुवमेण ।

कदुअ जादाणुकंपेण ण णिवारिदो णाअराएण वासुइणा । हा किदंतहदअ णिग्घिणहिअअ कहं दाणिं तुए एव्वं वितिण्णे जीअलोए मम पुत्तओ एव्व सुमरिदो । सव्वधा हदह्मि मन्दभाइणी । [पुत्रक कथं समाश्वसिमि । किमेक एव पुत्रक इति कृत्वा जातानुकम्पेन न निवारितो नागराजेन वासुकिना । हा कृतान्तहतक निर्घृणहृदय कथमिदानीं त्वयैवं विस्तीर्णे जीवलोके मम पुत्रक एव स्मृतः । सर्वथा हतास्मि मन्दभागिनी । ]

( मूर्च्छां नाटयति )

नायकः—

आर्तं कण्ठगतप्राणं परित्यक्तं स्वबन्धुभिः ।
त्राये नैनं यदि ततः कः शरीरेण मे गुणः ॥ ११ ॥

तद्यावदुपसर्पामि ।

शङ्खचूडः—अम्ब संस्तम्भयात्मानम् ।

वृद्धा—हा पुत्तअ जदा णाअलोअपरिरक्खकेण वासुइणा परिच्चत्तोसि तदा को दे अवरो परित्ताणं करिस्सदि । [ हा पुत्रक यदा नागलोकपरिरक्षकेण वासुकिना परित्यक्तोऽसि तदा कस्तेऽपरः परित्राणं करिष्यति ।]

नायकः— ( सत्वरमुपसृत्य ) नन्वहम् ।

वृद्धा—( ससंभ्रममुत्तरीयेण पुत्रमाच्छाद्य नायकमुपसृत्य ) विणदाणन्दण वावादेहि मं । अहं दे णाअराएण आहारणिमित्तं परिकप्पिदा । [विनतानन्दन व्यापादय माम् । अहं ते नागराजेनाहारनिमित्तं परिकल्पिता । ]

नायकः—( सास्रम् ) अहो पुत्रवात्सल्यम् ।

अस्या विलोक्य मन्ये पुत्रस्नेहेन विक्लवत्वमिदम् ।
अकरुणहृदयः करुणां करिष्यति भुजंगशत्रुरपि ॥ १२ ॥

शङ्खचूडः—अम्ब अलं त्रासेन । न खल्वयं नागशत्रुः । पश्य

महाहिमस्तिष्कविभेदमुक्तरक्तच्छटाचर्चितचण्डचञ्चुः ।
क्वासौ गरुत्मान् क्व च नाम सौम्यस्वभावरूपाकृतिरेष साधुः ॥ १३ ॥

---

१ साणुकंपेण णाअराएण पेसिदोसि ।(सानुकम्पेन नागराजेन प्रेषितोऽसि)। किदाणुकम्पेण णिवत्ताविदोसि णाअराएण । ( कृतानुकम्पेन निवर्तितोऽसि नागराजेन ) २ अविच्छिण्णे जीअलोए मह पुत्तो ण विसुमरिदो । (अविच्छिन्ने जीवलोके मम पुत्रो न विस्मृतः । ) ३ कुर्वीत । ४ सोमस्वभाव, सौम्यः स्वस्वभावाकृति। सोमसौम्यस्वभावाकृति ।

वृद्धा—हा पुत्तअ अहं खु तुज्झ मरणभीदा सव्वं एव्व जीअलोअं गरुअमअं पेक्खामि । [ हा पुत्रक अहं खलु तव मरणभीता सर्वमेव जीवलोकं गरुडमयं प्रेक्षे । ]

नायकः—अम्ब मा भैषीः । नन्वहं विद्याधरस्तव पुत्ररक्षणार्थमेवागतः । अतस्त्वं धीरा भव ।

वृद्धा—( सहर्षम् ) पुत्तअ पुणोवि एदाइं अक्खराइं भण । [ पुत्र पुनरप्येतान्यक्षराणि भण । ]

नायकः—अम्ब किं पुनः पुनरभिहितेन । ननु कर्मणैव संपादयामि ।

वृद्धा—( शिरस्यञ्जलिं बद्ध्वा ) पुत्तअ चिरंजीअ । [ पुत्र चिरंजीव । ]

नायकः—

ममैतदम्बार्पय वध्यचिह्नं प्रावृत्य यावद्विनतात्मजाय ।
पुत्रस्य ते जीवितरक्षणाय स्वदेहमाहारयितुं ददामि ॥ १४ ॥

वृद्धा—( कर्णौ पिधाय ) पडिहदं अमंगलं । जाद तुमं सङ्खचूडणिव्विसेसो एव्व पुत्तओ । अहवा सङ्खचूडादो अहिओ जो एव्व बन्धुजणपरिच्चत्तं मे पुत्तअं णिअसरीरदाणेण रक्खिदुमिच्छसि । [ प्रतिहतममङ्गलम् । जात त्वं शङ्खचूडनिर्विशेष एव पुत्रकः । अथवा शङ्खचूडादधिको य एवं बन्धुजनपरित्यक्तं मे पुत्रकं निजशरीरदानेन रक्षितुमिच्छसि । ]

शङ्खचूडः—(सस्मितम्) अहो जगद्विपरीतमस्य महासत्त्वस्य चरितम्[3] । कुतः

विश्वामित्रः श्वमांसं श्वपच इव पुरा भक्षयद्यन्निमित्तं
नाडीजङ्घो निजघ्ने कृततदुपकृतिर्यत्कृते गौतमेन ।
पुत्रोऽयं काश्यपस्य प्रतिदिनमुरगानत्ति तार्क्ष्यो यदर्थं
प्राणांस्तानेव चित्रं तृणमिव कृपया यः परार्थे जहाति ॥ १५ ॥

( नायकमुद्दिश्य ) भो महात्मन् दर्शिता त्वयेयमात्मप्रदानाध्यवसायान्निर्व्याजा मयि दयालुता । तदलमनेन निर्बन्धेन । पश्य

जायन्ते च म्रियन्ते च मादृशाः क्षुद्रजन्तवः ।
परार्थदत्तदेहानां त्वादृशां संभवः कुतः ॥ १६ ॥

१ सच्चिओ । ( तद्दशः । ) २ ( नयिपादम् ) ३ चेतः । ४ तानेव सावु स्तृण । ५ उत्पद्यन्ते । ६ परार्थे यद्बद्धकक्षाणां ।

ततः किमनेन ते मरणाग्रहेण । प्रसीद मुच्यतामयमध्यवसायः ।

नायकः—( शङ्खचूडं हस्ते गृहीत्वा ) कुमार शङ्खचूड न मे चिराल्ल-
२ ब्धावसरस्यास्य परार्थसंपादनमनोरथस्यान्तरायं कर्तुमर्हसि । तदलं विक-
ल्पेन । दीयतां मे तद् वध्यचिह्नम् ।

शङ्खचूडः—भो महासत्त्व किमनेन वृथात्मायासेन । न खलु शङ्खचूडः
६ शङ्खधवलं शङ्खपालकुलं मलिनीकरोति । अथ ते वयमनुकम्पनीयास्तदि-
यमस्माद्विपत्तिविक्लवाम्बा न यथा जीवितं जह्यात्तथाभ्युपायश्चिन्त्यताम् ।

नायकः—किमत्र चिन्त्यते । ननु चिन्तित एवोपायः स च त्वदायत्तः

१ शङ्खचूडः—कथमिव ।

नायकः—

म्रियते म्रियमाणे या त्वयि जीवति जीवति ।
तां यदीच्छसि जीवन्तीं रक्षात्मानं ममासुभिः ॥ १७ ॥

अयमभ्युपायस्तदर्पय त्वरितं वध्यचिह्नम् । यावदनेनात्मानं प्रच्छाद्य
वध्यशिलामारोहामि । त्वमपि जननीं पुरस्कृत्यास्मात्प्रदेशान्निवर्तस्व ।
३ कदाचिदियमालोक्यैव संनिकृष्टं घातस्थानं स्त्रीस्वभावकातरतया जीवितं
जह्यात् । किं न पश्यति भवानिदं विपन्नपन्नगानेकङ्कालसङ्कुलं महा-
श्मशानम् । तथा हि

चञ्च्चञ्चूधृतार्धच्युतपिशितलवग्रासंवृद्धगर्धै-
र्गृध्रैराबद्धपक्षद्वितयविधुतिभिर्बद्धसान्द्रान्धकारे ।
वक्त्रोद्वान्ताःपतन्त्यश्छिमिति शिखिशिखाश्रेणयोऽस्मिञ्शिवाना-
मस्रस्रोतस्यजस्रस्रुतबहलवसावासविस्रे स्वनन्ति ॥ १८ ॥

शङ्खचूडः—कथं न पश्यामि ।

प्रतिदिनमशून्यमहिनाहारेण विनायकाहितभीति ।
शशिधवलास्थिकपालं वपुरिव रौद्रं श्मशानमिदम् ॥ १९ ॥

तद्गच्छ । किमेभिर्त्रासोपन्यासैः । आसन्नः खलु गरुडागमनसमयः ।
( मातुरग्रतो जानुभ्यां स्थित्वा शिरोनिहिताञ्जलिः ) अम्ब त्वमपि निवर्त-
२ स्वेदानीम् ।

---

१ स्त्रीतहभुवा कातरत्वेन । २ अग्रकृत्त ३ सवृद्धलक्षैः । ४ यत्रोद्वामं
-मन्त्यः स्थगित । ५ शमित । ६ सामोपन्यासैः, त्रासनोपायैः ।

समुत्पत्स्यामहे मातर्यस्यां यस्यां गतौ वयम ।
तस्यां तस्यां प्रियसुते माता भूयास्त्वमेव न ॥ २० ॥

( पादयोः पतति )

वृद्धा—( सास्रमात्मगतम् ) हा कहं अवेच्छिमं मे वअण । ( प्रकाशम् ) पुत्तअ ण खु तुमं उज्झिअ मे पाआ अण्णदो वहन्ति । ता इह एव्व तुए सह मरिस्सं । [ हा कथमपश्चिममस्य वचनम् । पुत्रक न खलु त्वामुज्झित्वा मे पादावन्यतो वहतः । तदिहैव त्वया सह मरिष्यामि । ]

शङ्खचूडः—( उत्थाय ) यावदहमप्यदूरे भगवन्तं दक्षिणगोकर्णं प्रदक्षिणीकृत्य स्वाम्यादेशमनुतिष्ठामि । ( उभौ निष्क्रान्तौ )

नायकः—कष्टं न संपन्नं मेऽभिलषितम् । तत्को नामाभ्युपायः ।

कञ्चुकी—( प्रविश्य ) इदं वासोयुगलं

नायकः—( दृष्ट्वा सहर्षमात्मगतम् ) दिष्ट्या सिद्धमभिवाञ्छितमनेनातर्कितोपनतेन रक्तांशुकयुगलेन ।

कञ्चुकी—देव्या मित्रावसुजनन्या कुमाराय प्रेषितम् । तदेतत्परिधत्तां कुमारः ।

नायकः—कञ्चुकिन् उपनय । ( कञ्चुकी उपनयति ) (गृहीत्वात्मगतम्) सफलीभूतो मे मलयवत्याः पाणिग्रहः । ( परिधाय प्रकाशम् ) कञ्चुकिन् गम्यताम् । मद्वचनादभिवादनीया देवी ।

कञ्चुकी—यदाज्ञापयति कुमारः । ( इति निष्क्रान्तः )

नायकः—

**वासोयुगमिदं रक्तं प्राप्तेकाले समागतम् ।**
**महतीं प्रीतिमाधत्ते परार्थे देहमुज्झतः ॥ २१ ॥**

( दिशोऽवलोक्य ) यथायं चलितमलयाचलशिखराशीलासंचय. प्रचण्डो नमस्वांस्तथा तर्कयाम्यासन्नीभूतः खलु पक्षिराजः । तथा हि

---

१ पच्चिम । ( पश्चिमं ) २ चिट्ठिस्स । (स्थास्यामि) ३ मप्यस्म दुत्तरेणादूरे । प्राप्ते काले ममागतम् । ५ करोति महतीं प्रीतिं परार्थैकदृशोमेम ।

तुल्याः संवर्तकाभ्रैः पिदधति गगनं पङ्क्तयः पक्षतीनां
तीरे वेगानिलोऽम्भः क्षिपति भुव इव प्लावनायाम्बुराशेः ।
कुर्वन् कल्पान्तशङ्कां सपदि च सभयं वीक्षितो दिग्द्विपेन्द्रैः
देहोद्योतैर्दशाशाः कपिशयति मुहुर्द्वादशादित्यदीप्तिः ॥ २२ ॥

तद्यावदसौ नागच्छति शङ्खचूडस्तावत् त्वरिततरमिमां वध्यशिलामारोहामि । ( तथा कृत्वोपविश्य स्पर्शं नाटयन् ) अहो स्पर्शोऽस्याः ।

न तथा सुखयति मन्ये मलयवती मलयचन्दनरसार्द्रा ।
अभिवाञ्छितार्थसिद्ध्यै वध्यशिलेयं यथाश्लिष्टा ॥ २३ ॥

अथवा किं मलयवत्या ।

शयितेन मातुरङ्के विश्रब्धं शैशवे न यत्प्राप्तम् ।
लब्धं सुखं मयास्या वध्यशिलायास्तदुत्सङ्गे ॥ २४ ॥

तदयमागतो गरुत्मान् । यावदात्मानमाच्छादयामि । ( तथा करोति )

( ततः प्रविशति गरुडः )

गरुडः—

दंष्ट्रा विम्बं हिमांशोर्भयकृतवलयां संस्मरन् शेषमूर्तिं
सानन्दं स्यन्दनाश्वत्रसनविचलिते पूष्णि दृष्टोऽग्रजेन ।
एष प्रान्तावसज्जज्जलधरपटलैरायतीभूतपक्षः
प्राप्तो वेलामहीध्रं मलयमहमहिम्रासगृध्नुः क्षणेन ॥ २५ ॥

नायकः—( सपरितोषम् )

संरक्षता पन्नगमद्य पुण्यं मयार्जितं यत् स्वशरीरदानात् ।
भवे भवे तेन ममैव भूयात् परोपकाराय शरीरलाभः ॥ २६ ॥

गरुडः—( नायकं निर्वर्ण्य )

अस्मिन्वध्यशिलातले निपतितं शेषानहीन् रक्षितुं
निर्भिद्याशनिदण्डचण्डतरया चञ्च्वाधुना वक्षसि ।

१ तीरे वेगान्निरस्त...सिन्धोः । २ यातो । ३ शिशु । ४ मनो । ५ सृष्टा । ६ क्षिप्त्वा...संहरन् शेषमूर्तिम् । ७ प्रान्तापसर्पज्जल ... । ८ पटलात्यापती । ९ वेगात् । १० परार्थहेतोः खलु देहलाभः । ममैवमेवं भूयात्परार्थः खलु देहलाभः ।

भोक्तुं भोगिनमुद्धरामि तरसा रक्ताम्बरप्रावृतं
दिग्धं मद्भयदीर्यमाणहृदयप्रस्यन्दिनेवासृजा ॥ २७ ॥

( इत्यभिपत्य नायकं गृह्णाति । नेपथ्ये पुष्पाणि पतन्ति । दुन्दुभिध्वनिश्च । )

गरुडः—( ऊर्ध्वं दृष्ट्वाकर्ण्य च ) अये पुष्पवृष्टिर्दुन्दुभिध्वनिश्च ।

आमोदानन्दितालिर्निपतति किमियं पुष्पवृष्टिर्नभस्तः
स्वर्गे किं वैष चक्रं मुखरयति दिशां दुन्दुभीनां निनादः[1]

( विहस्य )

आं ज्ञातं सोऽपि मन्ये मम जवमरुता कम्पितः पारिजातो
मन्द्रं संवर्तकाभ्रैरिदमपि रसितं जातसंहारशङ्कैः ॥ २८ ॥

नायकः—( आत्मगतम् ) दिष्ट्या कृतार्थोऽस्मि ।

गरुडः—( नायकं कवलयन् )

नागानां रक्षिता भाति गुरुरेष यथा मम ।
तथा सर्पाशनाकाङ्क्षां व्यक्तमद्यापनेष्यति ॥ २९ ॥

तद्यावदहं मलयशिखरमारुह्य यथेष्टमाहारयामि ।

( नायकं गृहीत्वा निष्क्रान्तः )

इति चतुर्थोऽङ्कः ।

---

१ नेपथ्ये दुन्दुभिध्वनिः पुष्पवृष्टिश्च । २ चैष । ३ सार्वं, सर्वैः । ४ रणित

# पञ्चमोऽङ्कः

( ततः प्रविशति प्रतीहारः । )

प्रतीहारः—

स्वगृहोद्यानगतेऽपि स्निग्धे पापं विशङ्क्यते स्नेहात् ।
किमु दृष्टबह्वपायप्रतिभयकान्तारमध्यस्थे ॥ १ ॥

तथा हि । जलधिवेलावलोकनकुतूहली निष्क्रान्तः कुमारो जीमूतवाहनश्चि- रयतीति दुःखमास्ते महाराजविश्वावसुः । समादिष्टश्चास्मि तेन । यथा
१ सुनन्द श्रुतं मया संनिहितगरुडप्रतिभयमुद्देशं गतो जामाता जीमूतवाहनो तत्र चिरयतीति शङ्कित एवास्म्यनेन वृत्तान्तेन । तत्त्वरितं विज्ञायागच्छ किमसौ स्वगृहमागतो न वेति । यावत्तत्र गच्छामि । (परिक्रामन्नग्रतोऽवलोक्य)
६ अयमसौ राजर्षिर्जीमूतवाहनस्य पिता जीमूतकेतुरुटजाङ्गणे सहधर्म- चारिण्या राजपुत्र्या वध्वा च पर्युपास्यमानस्तिष्ठति । तथा हि

क्षौमे भङ्गवती तरङ्गतरले फेनाम्बुतुल्ये वहन्
जाह्नव्येव विराजितः सवयसा देव्या महापुण्यया ।
धत्ते तोयनिधेरयं सुसदृशीं जीमूतकेतुः श्रियं
यस्यैषान्तिकवर्तिनी मलयवत्याभाति वेला यथा ॥ २ ॥

तद्यावदुपसर्पामि । ( ततः प्रविशत्यासनस्थः पत्नीवधूसमेतो जीमूतकेतुः )

जीमूतकेतुः—

भुक्तानि यौवनसुखानि यशोऽवकीर्णं
राज्ये स्थितं स्थिरधिया चरितं तपोऽपि ।
श्लाघ्यः सुतः स्वसदृशान्वयजा स्नुषेयं
चिन्त्यो मया ननु कृतार्थतयाद्य मृत्युः ॥ ३ ॥

प्रतीहारः—( सहसोपसृत्य ) जीमूतवाहनस्य—

जीमूतकेतुः—( कर्णौ पिधाय ) शान्तं पापम् ।

२ देवी—पडिहदं अमंगलम् । [ प्रतिहतममङ्गलम् । ]

---

१ तरङ्गितदृशे । २ सुपयसा । ३ यशो विकीर्णं । ४ सुसदृशा ।

**नायिका**—अमिणा दुण्णिमित्तेण वेवदी विअ मे हिअअं। [अनेन दुर्निमित्तेन वेपत इव मे हृदयम्। ]

जीमूतकेतुः—भद्र किं जीमूतवाहनस्य।

प्रतीहारः—जीमूतवाहनस्य वार्तामन्वेष्टुं प्रेपितोऽस्मि महाराजविश्वावसुना युष्मदन्तिकम्। तदाज्ञापयतु महाराजः किं मया स्वामिने विज्ञापनीयमिति।

जीमूतकेतुः—किमसंनिहितस्तत्रापि मे वत्सः।

प्रतीहारः—अथ किम्।

देवी—( सविषादम् ) जइ तहिं ण सण्णिहिदो ता कहिं गदो मे पुत्तओ भविस्सादि जेण एव्वं चिरअदि। [ यदि तत्र न संनिहितस्तत् क्व गतो मे पुत्रको भविष्यति येनैवं चिरयति। ]

जीमूतकेतुः—नियतमस्मत्प्राणयात्रार्थं नितान्तं दूरं गतो भविष्यति।

नायिका—( सविषादमात्मगतम् ) अहं उण अज्जउत्तं अपेक्खन्ती अण्णं एव्व किं वि आसंकामि। [ अहं पुनरार्यपुत्रमप्रेक्ष्यमाणान्यदेव किमप्याशङ्के। ]

प्रतीहारः—आज्ञापयतु महाराजः। कि मया स्वामिने निवेदनीयम्।

जीमूतकेतुः—( वामाक्षिस्पन्दनं सूचयित्वा ) जीमूतवाहनश्चिरयतीति मर्य्याकुले विचिन्तयति

स्फुरसि किमदक्षिणेक्षण मुहुर्मुहुः सूचयन् ममानिष्टम्।
हतचक्षुरपहतं ते स्फुरितं मम पुत्रकः कुशली ॥ ४ ॥

( ऊर्ध्वमवलोक्य ) अयमेव त्रिभुवनैकचक्षुर्भगवान् सहस्रदीधितिः स्फुरन् जीमूतवाहनस्य श्रेयः करिष्यति। ( सविस्मयम् )

आलोक्यमानमतिलोचनदुःखदायि
रक्तच्छटा निजमरीचिरुचो विमुञ्चत्।
उत्पातवाततरलीकृततारकाभ-
मेतत्पुरः पतति किं सहसा नभस्तः ॥ ५ ॥

कथं चरणयोरेव पतितम्। ( सर्वे निरूपयन्ति )

---

१ पर्याकुलोऽस्मि हृदयेन। २ किमु दक्षिणेतर। ३ स्फुरितमिष्टं करिष्यते मानुः। ४ स्फुटं। ५ काल-।

जीमूतकेतुः—अये कथं लग्नसरक्तमांसकेशश्चूडामणिः । कस्य पुनरयं भविष्यति ।

देवी—( सविषादम् ) महाराअ पुत्तअस्स विअ मे एदं चूडारअणं । [ महाराज पुत्रकस्येव एतच्चूडारत्नम् । ]

नायिका—मा एव्वं भण । [ मैवं भण । ]

प्रतीहारः—महाराज मैवमविज्ञाय विक्लवो भूः । अत्र हि तार्क्ष्येण भक्ष्यमाणानां नागाधिपानामनेकशो नखमुखोत्खाताःपतन्त्येते शिरोमणयः ।

जीमूतकेतुः—देवि सोपपत्तिकमभिहितम् । कदाचिदेवमपि स्यात् ।

देवी—सुणन्दअ जाव इमाए वेलाए ससुरसदणं एव्व गदो मे पुत्तको भविस्सदि । ता गच्छ जाणिअ लहुं एव अह्माणं णिवेदेहि । [ सुनन्द यावदनया वेलया श्वशुरसदनमेव गतो मे पुत्रको भविष्यति । तद्गच्छ ज्ञात्वा लघ्वेवास्माकं निवेदय । ]

प्रतीहारः—यदाज्ञापयति देवी । ( इति निष्क्रान्तः )

जीमूतकेतुः—देवि अपि नाम नागचूडामणिरयं स्यात् ।

( ततः प्रविशति रक्तवस्त्रसंवीतः शङ्खचूडः )

शङ्खचूडः—( सास्रम् ) कष्टं भोः कष्टं.

गोकर्णमर्णवतटे त्वरितं प्रणम्य
प्राप्तोऽस्मि तामिह भुजंगमवध्यभूमिम् ।
आदाय तं नखमुखक्षतवक्षसं च
विद्याधरं गगनमुत्पतितो गरुत्मान् ॥ ६ ॥

हा परमकारुणिक हा निष्कारणैकबान्धव हा परदुःखदुःखित हा विपद्वारिनिधिपतितजनोद्धरणपोत हा परोपकारतृणीकृतदत्तदेह क नु खलु गतोऽसि । प्रयच्छ मे प्रतिवचनम् । हा हा हतोऽस्मि मन्दभाग्यः । हा शङ्खचूडहतक किं कृतं त्वया ।

नाहित्राणात्कीर्तिरेका मयाप्ता
नापि श्लाघ्या स्वामिनोऽनुष्ठिताज्ञा ।

१ तार्क्ष्येण भक्ष्यमाणानां पन्नगानामनेकशः । उल्कारूपाः पतन्त्येते शिरोमणय ईदृशाः ॥ २ काहमाप्ता ।

दत्त्वात्मानं रक्षितोऽन्येन शोच्यो
हा धिक् कष्टं वञ्चितो वञ्चितोऽस्मि ॥ ७ ॥

तन्नाहमेवंविधः क्षणमपि जीवन्नुपहास्यमात्मानं करोमि । तत् मानवेन-मनुगन्तुं प्रयतिष्ये । ( परिक्रामन् भूमौ दत्तदृष्टिः )

आदावुत्पीडपृथ्वीं प्रविरलपतितस्थूलबिन्दुं ततोऽग्रे
ग्रावस्वापातशीर्णप्रसृततनुकणां कीटकीर्णां स्थलीषु ।
दुर्लक्ष्यां धातुभित्तौ घनतरुशिखरे गह्वरे स्त्यानरूपा-
मेनां तार्क्ष्यं दिदृक्षुर्निपुणमनुसरन् रक्तधारां व्रजामि ॥ ८ ॥

देवी—( समाध्वसम् ) महाराअ एसो कोवि रुदिदवअणो इदो एव्व तुरिदं आअच्छन्तो हिअअं मे आकुलीकरेदि । ता जाणीअदु दाव को एसोत्ति । [ महाराज एष कोऽपि रुदितवदन इत एव त्वरितमागच्छन्हृदयं म आकुलीकरोति । तज्ज्ञायतां तावत्क एष इति । ]

जीमूतकेतुः—यथाह देवी ।

शङ्खचूडः—( साक्रन्दम् ) हा त्रिभुवनैकचूडामणे क्व मया द्रष्टव्योऽसि । मुषितोऽस्मि भो मुषितोऽस्मि ।

जीमूतकेतुः—( आकर्ण्य सहर्षम् ) देवि मुञ्च विषादम् । अस्यायं चूडामणिर्नूनं मांसलोभात् केनापि पक्षिणा मस्तकादुत्खायानीयमानोऽस्यां भूमौ पतितः ।

देवी—( सहर्षं मलयवतीमालिङ्ग्य ) अविहवे धीरा होहि । ण खु ईदिसी आकिदी वेहव्वदुक्खं अणुहोदि । [ अविधवे धीरा भव । न खल्वीदृश्याकृतिर्वैधव्यदुःखमनुभवति । ]

नायिका—( सहर्षम् ) अम्ब तुह्माणं आसिसां पभाएण । [ अम्ब युष्माकमाशिषां प्रभावेन । ] ( इति पादयोः पतति )

जीमूतकेतुः—( शङ्खचूडमुपसृत्य ) वत्स किं तव चूडामणिरपहृतः ।

शङ्खचूडः—आर्य न ममैव त्रिभुवनस्यापि ।

---

१ तेन वा । २ वञ्चितोऽसि ३ पतितां । ४ भावण्यापातशीर्णां । ५ पीठे । भित्ते ६ घन । ७ स्त्याननीलस्वरूपां । ८ परुण्ण ( प्ररुण्ण ) ९ हा परार्थंदत्तदेह, क्वासि प्रस्थितो मया द्रष्टव्यः । १० तुह एसा आसी । ( तवैषा आशीः । )

जीमूतकेतुः—कथमिव ।

शङ्खचूडः—दुःखातिभाराद्बाष्पोपरुद्धकण्ठो न शक्नोमि कथयितुम् ।

जीमूतकेतुः—( आत्मगतम् ) हन्त हतोऽस्मि । ( प्रकाशम् )

आवेदय ममात्मीयं पुत्र दुःखं सुदुःसहम् ।
मयि संक्रान्तमेतत्ते येन सह्यं भविष्यति ॥ ९ ॥

शङ्खचूडः—श्रूयताम् । शङ्खचूडो नाम नागः खल्वहं वैनतेयस्याहारार्थमवसरप्राप्तो वासुकिना प्रेषितः । किं बहुना विस्तरेण । कदाचिदियं रुधिरधारापद्धतिः पांसुभिरवकीर्यमाणा दुर्लक्ष्यतामुपयाति । अतः संक्षेपतः कथयामि ।

विद्याधरेण केनापि करुणाविष्टचेतसा ।
मम संरक्षिताः प्राणा दत्त्वात्मानं गरुत्मते ॥ १० ॥

जीमूतकेतुः—कोऽन्य एवं परहितव्यसनी । ननु स्फुटमेवोच्यतां जीमूतवाहनेनेति । हा हतोऽस्मि मन्दभाग्यः ।

देवी—हा पुत्तअ किं तुए किदं । [ हा पुत्रक किं त्वया कृतम् । ]

नायिका—हा कहं सच्चीभूदं मे दुण्णिमित्तम् । [ हा कथं सत्यीभूतं मे दुर्निमित्तम् । ] ( सर्वे मोहं गच्छन्ति )

शङ्खचूडः—( सास्रम् ) अये नूनमेतौ पितरौ तस्य महासत्त्वस्य । अप्रियनिवेदनान्मयैवेमामवस्थां नीतौ । अथवा विषधरवदनाद्विषमन्तरेण किमन्यन्निःसरति । अहो प्राणप्रदस्य सुसदृशं प्रत्युपकृतं जीमूतवाहनस्य शङ्खचूडेन । तत्किमधुनैवात्मानं व्यापादयामि । अथवा समाश्वासयामि तावदेतौ । तात समाश्वसिहि । समाश्वसित्वम्बा । ( उभौ समाश्वसितः )

देवी—वच्छे उट्ठेहि मा रोअ । अह्ले किं जीमूदवाहणेण विणा जीवह्म । ता समस्सस दाव । [ वत्से उत्तिष्ठ मा रुदिहि । वयं किं जीमूतवाहनेन विना जीवामः । तत् समाश्वसिहि तावत् । ]

नायिका—( समाश्वस्य ) हा अज्जउत्त कहिं दाणिं मए तुमं पेक्खिदव्वो । [ हा आर्यपुत्र क्वेदानीं मया त्वं प्रेक्षितव्यो । ]

जीमूतकेतुः—हा वत्स गुरुचरणशुश्रूषाभिज्ञ ।

---

१ संक्रान्तमस्ति हृदये । २ दुच्चिन्तिदं । (दुश्चिन्तितम्)

चूडामणिं चरणयोर्मम पातयता त्वया ।
लोकान्तरगतेनापि नोज्झितो विनयक्रमः ॥ ११ ॥

( चूडामणिं गृहीत्वा ) हा वत्स कथमेतावन्मात्रदर्शनः संवृत्तोऽसि । ( हृदये दत्त्वा ) अहह ।

भक्त्या सुदूरमवनामितनम्रमौलेः
शश्वत्तव प्रणमतश्चरणौ मदीयौ ।
चूडामणिर्निकषणैर्मसृणोऽप्ययं हि
गाढं विदारयति मे हृदयं कथं नु ॥ १२ ॥

देवी—हा पुत्त जीमूदवाहण जस्स दे गुरुजणसुस्सूसं वज्जिअ अण्ण सुहं ण रोआदि सो कहं दाणि पिदरं उज्झिअ सग्गसुहमणुभविदुं गदोसि । [ हा पुत्र जीमूतवाहन यस्य ते गुरुजनशुश्रूषां वर्जयित्वान्यत् सुखं न रोचते स कथमिदानीं पितरमुज्झित्वा स्वर्गसुखमनुभवितुं गतोऽसि । ]

जीमूतकेतुः—( सास्रम् ) देवि किं जीमूतवाहनेन विना जीवामो वयं येनैवं विलपसि ।

नायिका—( पादयोर्निपत्य कृताञ्जलिः ) ताद देहि मे अज्जउत्तस्स चूडारअणं जेण एदं हिअए करिअ जलणप्पवेसेण अवणेमि अत्तणो सन्दावदुक्खं । [ तात देहि मे आर्यपुत्रस्य चूडारत्नं येनैतद् हृदये कृत्वा ज्वलनप्रवेशेनापनयाम्यात्मनः संतापदुःखम् । ]

जीमूतकेतुः—पतिव्रते किं मामाकुलयसि । ननु सर्वेषामेवास्माकमयं निश्चयः ।

देवी—महाराअ ता किंपडिवालीअदि । [ महाराज तत्किं प्रतिपाल्यते । ]

जीमूतकेतुः—देवि न किंचित् । किन्त्वाहिताग्नेर्नान्येनाग्निना संस्कारो विहितः । अतोऽग्निहोत्रशरणाद्ग्नीनादायात्मानमुद्दीपयामः ।

शङ्खचूडः—( आत्मगतम् ) कष्टं ममैकस्य पापस्य कृते सकलमेवेदं विद्याधरकुलमुच्छिन्नम् । तदेवं तावत् । ( प्रकाशम् ) तात न खल्वनिश्चित्यैव युक्तमिदमीदृशं साहसमनुष्ठातुम् । विचित्राणि हि विधेर्विलसितानि । कदाचिन्नायं नाग इति ज्ञात्वा जीवन्तमेव जीमूतवाहनं परित्यजेन्नागशत्रुः । तदनयैव रुधिरधारया वैनतेयमनुसरामः ।

---

१ विदूरविनताननन्त्र । तिदूरमवनावनम्र । २ प्याहिंसो । ३ विघटयति । ४ कि-
०२ । ५ दिश ।

२१ देवी—सव्वहा देवदाणं पसादेण जीवन्तस्स पुत्तअस्स मुहं दंसेम ।
[ सर्वथा देवतानां प्रसादेन जीवतः पुत्रस्य मुखं पश्येम । ]

नायिका—( आत्मगतम् ) दुल्लहं खु एदं मम मन्दभग्गाए । [ दुर्लभं
२४ खल्वेतन्मम मन्दभाग्यायाः । ]

जीमूतकेतुः—वत्स अवितथैषा तव भारती भवतु । तथापि साग्निनामे-
वास्माकं युक्तमनुसर्तुम् । तदनुसरतु भवान् । वयमप्यग्निशरणादग्नीनादाय
२७ त्वरितमेवानुगच्छामः । ( इति पत्नीवधूसमेतो निष्क्रान्तः )

शङ्खचूडः—तद्यावद्गरुडमनुसरामि । ( परिक्रम्याग्रतो निर्वर्ण्य )

**कुर्वाणो रुधिरार्द्रचञ्चुकषणैर्द्रोणीरिवाद्रेः शिलाः**
**पुष्णोपान्तवनान्तरः स्वनयनज्योतिःशिखासंचयैः ।**
**मज्जद्वज्रकठोरघोरनखरप्रान्तावगाढावनिः**
**शृङ्गाग्रे मलयस्य पन्नगरिपुर्दूरादयं दृश्यते ॥ १३ ॥**

( ततः प्रविशत्यासनस्थः पुरःपतितनायको गरुडः )

गरुडः—( आत्मगतम् ) जन्मनःप्रभृति भुजंगपतीनश्नता नेदमीदृश-
३ मत्याश्चर्यं मया दृष्टपूर्वं यदयं महासत्त्वो न केवलं न व्यथते प्रत्युत प्रहृष्ट
इव किमपि दृश्यते । तथा हि

**ग्लानिर्नाधिकपीयमानरुधिरस्याप्यस्ति धैर्योदधे-**
**र्मांसोत्कर्तनजा रुजोऽपि वहतः प्रीत्या प्रसन्नं मुखम् ।**
**गात्रं यन्न विलुप्तमेष पुलकस्तत्र स्फुटो लक्ष्यते**
**दृष्टिर्मय्युपकारिणीव निपतत्यस्यापकारिण्यपि ॥ १४ ॥**

तत्कुतूहलमेव जनितमस्यानया धैर्यवृत्त्या । भवतु न भक्षयाम्येवैनम् ।
पृच्छामि तावत्कोऽयमिति । ( अपसर्पति )

३ **नायकः**—( मांसोत्कर्तनाविमुखमुपलक्ष्य )

**शिरामुखैः स्यन्दत एव रक्त-**
**मद्यापि देहे मम मांसमस्ति ।**

---

१ तटीः । नवाः । २ श्रेणिभिः । ३ सज्जत् । ४ मांसोत्कर्षणजा । ५ उप-
रतो भक्षणात्पुरस्तिष्ठति ।

Jīmūtavāhana's action and people would be found in this strange world of ours, who in the plenitude of their wisdom, would point to his sins of commission and omission, and would also suggest other means which he ought to have employed to achieve his object It would be still easier to dub Jīmūtavāhana a mere fanatic It must be remembered however, that it is the occasional rising up of noble souls like Jīmūtavāhana that makes this world worth living in It is suffering that ultimately conquers. Christ suffered at the cross for the sake of humanity and the crucification of Christ, none can deny, is his most splendid triumph The suffering must, of course, be spontaneous, untainted by any ignoble considerations, and it would hit its mark in the end. The victory achieved by suffering and love is by far the more permanent than what would be achieved by big battalions on whose side God is erroneously supposed to be

---

## APPENDIX A

### Definitions of some dramatic terms.

अङ्कः- प्रत्यक्षनेतृचरितो रसभावसमुज्ज्वलः ।
भवेदगूढशब्दार्थः क्षुद्रचूर्णकसंयुतः ॥
विच्छिन्नावान्तरैकार्थः किञ्चित्संलग्नबिन्दुकः ।
युक्तो न बहुभिः कार्यैर्बीजसंहृतिमान्न च ॥
नानाविधानसंयुक्तो नातिप्रचुरपद्यवान् ।
आवश्यकानां कार्याणामविरोधाद्विनिर्मितः ॥
नानेकदिननिर्वर्त्यकथया संप्रयोजितः ।
आसन्ननायकः पात्रैर्युतस्त्रिचतुरैस्तथा ॥
दूराह्वानं वधो युद्धं राज्यदेशादिविप्लवः ।
विवाहो भोजनं शापोत्सर्गौ मृत्यू रत तथा ॥
दन्तच्छेद्यं नखच्छेद्यमन्यद्व्रीडाकरं च यत् ।
शयनाधरपानादि नगराद्यवरोधनम् ॥
स्नानानुलेपने चैभिर्वर्जितो नातिविस्तरः ।
देवीपरिजनादीनाममात्यवणिजामपि ॥
प्रत्यक्षचित्रचरितैर्युक्तो भावरसोद्भवैः ।
अन्तनिष्क्रान्तनिखिलपात्रोऽङ्क इति कीर्तितः ॥

(*Sāhityadarpana* VI)

अपवारितम्-रहस्य कथ्यतेऽन्यत्र परावृत्त्यापवारितम् । (*Dasarūpa* I)

(*Rasārnava* III)

... ... ... ... तद्भवेदपवारितम्
रहस्य तु यदन्यस्य परावृत्त्य प्रकाश्यते ॥ (*Sāhitya* VI)

आमुखम् or प्रस्तावना-
नटी विदूषको वापि पारिपार्श्वक एव च ॥
सहिताः सूत्रधारेण संलापं यत्र कुर्वते ।
चित्रैर्वाक्यैः स्वकार्योत्थैः प्रस्तुताक्षेपिभिर्मिथः ।
आमुख्य (ख) तत्तु विज्ञेय बुधैः प्रस्तावनापि सा ॥
आमुख्यस्य त्रयो भेदा बीजांशेपूपजायते ।
काल प्रवृत्तमाश्रित्य सूत्रधृग्यत्र वर्णयेत् ॥

[illegible] ।
[illegible] ।
[illegible] कथोद्घात [illegible] ।
[illegible] ।
[illegible] प्रयोगातिशयो [illegible]
[illegible]

[illegible] ॥
[illegible] ।
प्रस्तावना [illegible] कथोद्घात [illegible] ।
प्रयोगातिशय [illegible] ।
[illegible] ॥
[illegible] कथोद्घातो [illegible] ।
[illegible] प्रवृत्तकम् ॥
[illegible] ।
[illegible] प्रयोगातिशयो [illegible] ॥

The definition of [illegible] given in the *S[illegible]* is practically the same as given in the *A[illegible]* The divisions of Prastāvanā are however given to be five instead of three The two more divisions added by the *S[illegible]* are given in the *Lasarūpa* under the thirteen [illegible]

उद्घात्यक कथोद्घात प्रयोगातिशयस्तथा ।
प्रवर्तकावलगिते पञ्च प्रस्तावनाभिदः ॥
पदानि त्वगतार्थानि तदर्थगतये नराः ।
योजयन्ति पदैरन्यैः स उद्घात्यक उच्यते ॥
सूत्रधारस्य वाक्यं वा समादायार्थमस्य वा ।
भवेत् पात्रप्रवेशश्चेत् कथोद्घातः स उच्यते ॥
यदि प्रयोग एकस्मिन् प्रयोगोऽन्यः प्रयुज्यते ।
तेन पात्रप्रवेशश्चेत्प्रयोगातिशयस्तदा ॥
कालं प्रवृत्तमाश्रित्य सूत्रधृग् यत्र वर्णयेत् ।
तदाश्रयस्य पात्रस्य प्रवेशस्तत्प्रवर्तकम् ॥
यत्रैकत्र समावेशात् कार्यमन्यत्प्रसाध्यते ।
प्रयोगे खलु तज्ज्ञेयं नाम्नावलगितं बुधैः ॥

The Prastāvanā of *[illegible]* would be either of the [illegible] or [illegible] type

The [illegible] gives only three divisions of आमुख as in *[illegible]*, but it gives Prastāvanā and Sthāpanā as the two varieties of Amukha

सूत्रधारो नटीं ब्रूते स्वकार्यं प्रति युक्तितः ।
प्रस्तुताक्षेपि चित्रोक्त्या यत्तदामुखमीरितम् ॥
[illegible] कथोद्घातः प्रवर्तकः ।
प्रयोगातिशयश्चेति ........ ..........॥
प्रस्तावना स्थापनेति द्विधाप्यादिदमामुखम् ॥
विदूषकनटीपारिपार्श्विकैः सह [illegible] ।
[illegible]सहितान्यामुखाङ्गानि सूत्रकृत् ॥
योजयेद् यत्र नान्द्यन्ते सा प्रस्तावना स्मृता ।
[illegible]मेतेषां च्यविस्तरैः ॥
सूत्रधारो यत्र नटीविदूषकनटादिभिः ।
[illegible] प्रस्तुत चार्थमाक्षिपेत् स्थापना हि सा ॥ ( *Rasār-rnavasudhākara* III )

कञ्चुकी—अन्तःपुरचरो वृद्धो विप्रो गुणगणान्वितः ।
सर्वकार्यार्थकुशलः कञ्चुकीत्यभिधीयते ।
जरावैक्लव्ययुक्तेन विशेद्गात्रेण कञ्चुकी ॥ ( *Nātyaśāstra*)

ये नित्य सत्यसंपन्ना कामदोषविवर्जिताः ।
ज्ञानविज्ञानकुशलाः कञ्चुकीयास्तु ते स्मृताः ॥ ( *Mātr-guptācārya* )

गण्डः—गण्ड प्रस्तुतसंबन्धि भिन्नार्थ सहसोदितम् । (*Daśarūpa* III )
गण्ड· प्रस्तुतसंबन्धि भिन्नार्थं सत्वर वचः । ( *Sāhitya* VI)

जनान्तिकम्—त्रिपताककरेणान्यानपवार्यान्तरा कथाम् ।
अन्योन्यामन्त्रण यत्स्याज्जनान्ते तज्जनान्तिकम् ॥
(*Daśarūpa* III)

The same definition is given in *Sāhitya* VI and *Rasārnavasudhākara*. जनान्तिकम् is the same as अपवारितम् for all practical purposes The difference lies in the manner in which the statement in question is made.

**नाटकम्**--नाटकं ख्यातवृत्तं स्यात् पञ्चसन्धिसमन्वितम् ।
and विलासर्द्ध्यादिगुणवद्युक्तं नानाविभूतिभिः ।
**नायकः**--सुखदुःखसमुद्भूतिनानारसनिरन्तरम् ।
पञ्चादिका दशपरास्तत्राङ्काः परिकीर्तिताः ॥
प्रख्यातवंशो राजर्षिर्धीरोदात्तः प्रतापवान् ।
दिव्योऽथ दिव्यादिव्यो वा गुणवान् **नायको** मतः ॥
एक एव भवेदङ्गी शृङ्गारो वीर एव वा ।
अङ्गमन्ये रसाः सर्वे कार्यो निर्वहणेऽद्भुतम् ॥
चत्वारः पञ्च वा मुख्याः कार्यव्यापृतपूरुषाः ।
गोपुच्छाग्रसमाग्रं तु बन्धनं तस्य कीर्तितम् ॥ ( *Sāhitya* VI)
**नेता** विनीतो मधुरस्त्यागी दक्षः प्रियंवदः ।
रक्तलोकः शुचिर्वाग्मी रूढवंशः स्थिरो युवा ॥
बुद्ध्युत्साहस्मृतिप्रज्ञाकलामानसमन्वितः ।
शूरो दृढश्च तेजस्वी शास्त्रचक्षुश्च धार्मिकः ॥
महासत्त्वोऽतिगम्भीरः क्षमावानविकत्थनः ।
स्थिरो निगूढाहङ्कारो धीरोदात्तो दृढव्रतः ॥ ( *Laśarūpa* )
**नान्दी**—नान्दी कृता मया पूर्वमाशीर्वचनसंयुता ।
अष्टाङ्गपदसंयुक्ता विचित्रा वेदनिर्मिता ॥
सूत्रधारः पठेत्तत्र मध्यमं स्वरमाश्रितः ।
नान्दीं पदैर्द्वादशभिरष्टभिर्वाप्यलंकृताम् ॥ ( *Nāṭyaśāstra* )
देवतानां नमस्कारो गुरूणामपि च स्तुतिः ।
गोब्राह्मणनृपादीनामाशीर्वादादि गीयते ॥
( *Agnipurāṇa* 338 9 )
आशीर्वचनसंयुक्ता स्तुतिर्यस्मात्प्रयुज्यते ।
देवद्विजनृपादीनां तस्मान्नान्दीति संज्ञिता ॥
मङ्गल्यशङ्खचन्द्राब्जकोककैरवशंसिनी ।
पदैर्युक्ता द्वादशभिरष्टाभिर्वा पदैरुत ॥ ( *Sāhitya* VI )
प्रस्तावनायास्तु मुखे **नान्दी** कार्या शुभावहा ।
आशीर्नमस्क्रियावस्तुनिर्देशान्यतमा स्मृता ॥
चन्द्रनामाङ्किता प्रायो मङ्गलार्थपदोज्ज्वला ॥
अष्टाभिर्दशभिः श्रेष्ठा सेयं द्वादशभिः पदैः ।
समैर्वा विषमैर्वापि प्रयोज्येत्यपरे जगुः ॥
(*Rasārṇavasudhākara* )

प्रशस्तपदविन्यासा चन्द्रसंकीर्तनान्विता ।
आशीर्वादपरा **नान्दी** योज्येवं मङ्गलान्विता ॥

काचिद् द्वादशपदा नान्दी काचिदष्टपदा तथा ।
सूत्रधारः पठेदेना मध्यमं स्वरमाश्रितः ॥

चन्द्रसंकीर्तनं यत्र तदधीनो रसो मतः ।
प्रीते चन्द्रमसि स्फीता रसश्रीरिति मालुकिः ॥ ( *Saṁgīta-sarvasva* )

**नेपथ्यम्**–कुशीलवकुटुम्बस्य स्थली **नेपथ्य**मुच्यते ।

**पताकास्थानकम्** प्रस्तुतागन्तुभावस्य वस्तुनोऽन्योक्तिसूचकम् ।

**पताकास्थानकं** तुल्यसंविधानविशेषणम् ॥ (*Daśarūpa* I )

यत्रार्थे चिन्तितेऽन्यस्मिन् तल्लिङ्गोऽन्यः प्रयुज्यते ।
आगन्तुकेन भावेन पताकास्थानकं तु तत् ॥

सहसैवार्थसंपत्तिर्गुणवत्युपचारतः ।
पताकास्थानकमिदं प्रथमं परिकीर्तितम् ।

वचः सातिशयश्लिष्टं नानाबन्धसमाश्रयम् ।
पताकास्थानकमिदं द्वितीयं परिकीर्तितम् ॥

अर्थोपक्षेपकं यत्तु लीनं सविनयं भवेत् ।
श्लिष्टप्रत्युत्तरोपेतं तृतीयमिदमुच्यते ॥

द्व्यर्थो वचनविन्यासः सश्लिष्टः काव्ययोजितः ।
प्रधानार्थान्तरापेक्षी पताकास्थानकं परम् ॥ ( *Sāhitya* IV )

**प्रकाशम्** । सर्वश्राव्यं **प्रकाशं** स्यादश्राव्यं **स्वगतं** मतम् ।
and (*Daśarūpa* I)

**स्वगतम्** । अश्राव्यं खलु यद्वस्तु तदिह **स्वगतं** मतम् ।
**(or आत्मगतम्)** सर्वश्राव्यं प्रकाशं स्यात् ... ... ( *Sāhitya* VI )

**प्रवेशकः**–द्वेधा विभागः कर्तव्यः सर्वस्यापीह वस्तुनः ।
**and** सूच्यमेव भवेत्किंचिद्दृश्यश्रव्यमथापरम् ॥

**विष्कम्भकः**–अर्थोपक्षेपकैः सूच्यं पञ्चभिः प्रतिपादयेत् ।
विष्कम्भचूलिकाङ्कास्याङ्कावतारप्रवेशकैः ॥

नीरसोऽनुचितस्तत्र संसूच्यो वस्तुविस्तरः ।
दृश्यस्तु मधुरोदात्तरसभावनिरन्तरः ॥

वृत्तवर्तिष्यमाणानां कथांशानां निदर्शकः ।
संक्षेपार्थस्तु विष्कम्भो मध्यपात्रप्रयोजितः ॥
एकानेकृतः शुद्धः संकीर्णो नीचमध्यमैः ।
तद्वदेवानुदात्तोक्त्या नीचपात्रप्रयोजितः ॥
प्रवेशोऽङ्कद्वयस्यान्तः शेषार्थस्योपसूचकः । ( Daśarūpa I )
वृत्तवर्तिष्यमाणानां कथांशानां निदर्शकः ।
संक्षिप्तार्थस्तु विष्कम्भ आदावङ्कस्य दर्शितः ।
मध्येन मध्यमाभ्यां वा पात्राभ्यां संप्रयोजितः ॥
शुद्धः स्यात्स तु संकीर्णो नीचमध्यमकल्पितः ।
प्रवेशकोऽनुदात्तोक्त्या नीचपात्रप्रयोजितः ।
अङ्कद्वयान्तर्विज्ञेयः शेषं विष्कम्भके यथा ॥ ( Sāhitya VI )

विटः, विदूषकः शृङ्गारस्य सहाया विटचेटविदूषकाद्याः स्युः ।
and चेटः—भक्ता नर्मसु निपुणाः कुपितवधूमानभञ्जनाः शुद्धाः ॥
संभोगहीनसंपद्विटस्तु धूर्तः कलैकदेशज्ञः ।
वेशोपचारकुशलो वाग्मी मधुरोऽथ बहुमतो गोष्ठ्याम् ॥
कुसुमवसन्ताद्यभिधः कर्मवपुर्वेषभाषाद्यैः ।
हास्यकरः कलहरतिर्विदूषकः स्यात्स्वकर्मज्ञः ॥
उत्तमाः पीठमर्दाद्या मध्यौ विटविदूषकौ ।
तथा शकारचेटाद्या अधमाः परिकीर्तिताः ॥ ( Sāhitya III)
एकविद्यो विटश्चान्यो हासकृच्च विदूषकः । ( Daśarūpa )
विकृताङ्गवचोवेशैर्हास्यकारी विदूषकः ।

सूत्रधारः— नाट्योपकरणादीनि सूत्रमित्यभिधीयते ।
सूत्रं धारयतीत्यर्थे सूत्रधारो निगद्यते ॥
आसूत्रयन् गुणान् नेतुः कवेरपि च वस्तुनः ।
रङ्गप्रसाधनप्रौढः सूत्रधार इहोदितः ॥
नाट्यस्य यदनुष्ठानं तत्सूत्रं स्यात्सबीजकम् ।
रङ्गदैवतपूजाकृत् सूत्रधार उदीरितः ॥
वर्तनीयकथासूत्रं प्रथमं येन सूच्यते ।
रङ्गभूमिं समासाद्य सूत्रधारः स उच्यते ॥

---

# APPENDIX B

( The story of Jīmūtavāhana as given in the *Kathāsaritsāgara* in the 23rd तरङ्ग of the शशाङ्कवतीलम्बक )

Pp 441–447, Nirnayasagar edition.

त्रयोविंशस्तरङ्गः

( षोडशो वेतालः )

अथ गत्वा पुनः स्कन्धे वेतालं शिंशपाद्रुमात् ।
स त्रिविक्रमसेनस्तमादायोद्चलत्ततः ॥ १

आगच्छन्तं च तं भूप स वेतालोऽब्रवीत्पुनः ।
राजञ्शृणु कथामेकामुदारां कथयामि ते ॥ २

अस्तीह हिमवान्नाम नगेन्द्रः सर्वरत्नभूः ।
यो गौरीगङ्गयोस्तुल्यः प्रभवो हरकान्तयोः ॥ ३

शूरासंस्पृष्टपृष्ठश्च यो मध्ये कुलभूभृताम् ।
अभिमानोन्नतः सत्यं गीयते भुवनत्रये ॥ ४

तस्यास्ति सानुन्यन्वर्थं तत्काञ्चनपुरं पुरम् ।
न्यासीकृतमिवार्केण रश्मिवृन्दं विभाति यत् ॥ ५

जीमूतकेतुरित्यासीत्तस्मिन्पुरवरे पुरा ।
विद्याधरेश्वरः श्रीमान्मेराविव शतक्रतुः ॥ ६

तस्यासीत्स्वगृहोद्याने कल्पवृक्षोऽन्वयागतः ।
यथार्थनामा प्रथितो यो मनोरथदायकः ॥ ७

तं प्रार्थ्य देवतात्मानं स राजा तत्प्रसादतः ।
प्राप जातिस्मरं पुत्रं बोधिसत्त्वांशसंभवम् ॥ ८

दानवीरं महासत्त्वं सर्वभूतानुकम्पिनम् ।
गुरुशुश्रूषणपरं नाम्ना जीमूतवाहनम् ॥ ९

संप्राप्तयौवनं तं च यौवराज्येऽभिषिक्तवान् ।
तनयं प्रेरितः सद्भिस्तद्गुणैः सचिवैश्च सः ॥ १०

यौवराज्यस्थितश्चैष जातु जीमूतवाहनः ।
हितैषिभिरुपागत्य जगदे पितृमन्त्रिभिः ॥ ११

देव कल्पतरुर्योऽयमस्ति वः सर्वकामदः ।
अधृष्यः [illegible] पूज्यः सदा तव ॥ १२

नास्मिन्स्तानि हि शक्रोऽपि यातेन स्थानतुर्नोऽर्थ ।
एतच्छ्रुत्वा स जीमूतवाहनोऽन्तरचिन्तयत् ॥ १३

अहो बतेदृशमिमं मराप्यामरपादपम् ।
नासादितं किमप्यस्मात्पूर्वैरस्माकं फलम् ॥ १४

केवलं कैश्चिदप्यर्थितं कृपणोचितम् ।
आत्मा चैव महात्मा च नीतौ द्वावपि लाघवम् ॥ १५

तदहं साधयिष्यामि काममस्मान्मनोगतम् ।
इति निश्चित्य स ययौ महासत्त्वोऽन्तिकं पितुः ॥ १६

तत्र सुविहिताशेषशुश्रूषापरितोषितम् ।
सुखासीनं तमेकान्ते पितरं स व्यजिज्ञपत् ॥ १७

तात त्वमेव जानासि यदेतस्मिन्भवाम्बुधौ ।
अशरीरमिदं सर्वं वीचिविभ्रमचञ्चलम् ॥ १८

विशेषेणाचिरस्थायिप्रकाशप्रविलायिनी ।
सन्ध्या विद्युच्च लक्ष्मीश्च दृष्टा कुत्र कदा स्थिरा ॥ १९

एकः परोपकारस्तु संसारेऽस्मिन्ननश्वरः ।
यो धर्मयशसी सूते युगान्तशतसाक्षिणी ॥ २०

तत्तात क्षणिकेष्वेषु भोगेष्वस्माभिरीदृशः ।
एष कल्पतरुः कस्य कृते मोघोऽभिरक्ष्यते ॥ २१

येषां मम ममेत्येवमाग्रहेणैष रक्षितः ।
पूर्वैस्ते कुत्र कुत्रायं तेषां कस्त्वेष कोऽस्य वा ॥ २२

तस्मात्परोपकारैकफलसिद्धयै त्वदाज्ञया ।
तातैनं विनियुञ्जेऽहं कामदं कल्पपादपम् ॥ २३

एवमस्त्विति पित्रा च दत्तानुज्ञोऽथ तेन सः ।
जीमूतवाहनो गत्वा कल्पद्रुममुवाच तम् ॥ २४

अभीष्टाः पूरिताः कामाः पूर्वेषां देव नस्त्वया ।
तन्ममैकमिमं काममनन्यं परिपूरय ॥ २५

अदरिद्रां यथा पृथ्वीमिमां द्रक्ष्ये तथा कुरु ।
भद्रं ते व्रज दत्तोऽसि लोकायार्थार्थिने मया ॥ २६

इत्युक्तवति जीमूतवाहने रचिताञ्जलौ ।
त्यक्तस्त्वयैष जातोऽस्मीत्युदभूद्वाक्तरोस्ततः ॥ २७

क्षणाच्चोत्पत्य स दिवं कल्पवृक्षस्तथा वसु ।
ववर्ष भुवि नैवासीत्कोऽप्यस्यां दुर्गतो यथा ॥ २८

ततस्तस्य तया तीव्रसर्वसत्त्वानुकम्पया ।
जीमूतवाहनस्यात्र त्रैलोक्ये पप्रथे यशः ॥ २९

तेन तद्गोत्रजाः सर्वे मात्सर्यादसहिष्णवः ।
तं लोकसात्कृतार्तिघ्नकल्पवृक्षविनाकृतम् ॥ ३०

जेयं सपितृकं मत्वा संभूय कृतनिश्चयाः ।
द्राय समनह्यन्त तद्राज्यापजिहीर्षया ॥ ३१

तद्दृष्ट्वा प्रह पितरं स्वं स जीमूतवाहनः ।
तात कस्यापरस्यास्ति शक्तिस्त्वयि धृतायुधे ॥ ३२

किं त्वस्य पापकस्यार्थे शरीरस्य विनाशिनः ।
हत्वा बन्धून्कृपणो राज्यं को नाम वाञ्छति ॥ ३३

तत्किं राज्येन नः कार्यं गत्वान्यत्र क्वचिद्वयम् ।
धर्ममेव चरिष्यामो लोकद्वयसुखावहम् ॥ ३४

मोदन्तां कृपणा एते दायादा राज्यलोलुपाः ।
इत्युक्तवन्तं जीमूतकेतुस्तं स पिताब्रवीत् ॥ ३५

अहं त्वदर्थमिच्छामि राज्यं पुत्र त्वमेव चेत् ।
तज्जहासि कृपाविष्टस्तन्मे वृद्धस्य तेन किम् ॥ ३६

एवं कृताभ्यनुज्ञेन पित्रा मात्रा च सोऽन्वितः ।
मलयाद्रिमगात्त्यक्तराज्यो जीमूतवाहनः ॥ ३७

तत्र चन्दनसच्छन्नवहन्निर्झरकन्दरे ।
शुश्रूषमाणः पितरं स तस्थौ कल्पिताश्रमः ॥ ३८

मित्रं चास्यात्र सपेदे मित्रावसुरिति श्रुतः ।
विश्वावसोः सुतः सिद्धराजस्यैतन्निवासिनः ॥ ३९

एकदा चात्र स भ्राम्यन्विवेशोपवनस्थितम् ।
द्रष्टुमायतनं देव्या गौर्या जीमूतवाहनः ॥ ४०

तत्रोपवीणयन्तीं च ददर्श वरकन्यकाम् ।
सखीजनान्वितां शैलतनयाराधनोद्यताम् ॥ ४१

आकर्ण्यमानसंगीतमञ्जुवीणारवां मृगैः ।
दृष्टलोचनलावण्यलज्जितैरिव निश्चलैः ॥ ४२

दधता तारकं रम्यमर्जुनेन महन्मुदा ।
पाण्डवीयामिव चमूं कर्णमूलं शिखण्डिना ॥ ४३

परस्परविमर्देन मुनेन्द्रोऽयं तपोवनम् ।
अनुभाविव याऽऽक्रान्तो विभ्रमो नवगो नवो ॥ ४४

धातुर्घटयतो मुग्धिनिर्माणेव निपातिते ।
वर्त्मसमाङ्गुलीनुष्टे मध्ये क्षामतनोरिव ॥ ४५

दृष्ट्या च तया तत्र सोऽभज्जीमूतवाहनः ।
तन्व्या मुनिनाचित्तोऽन्तर्दृष्टिमार्गप्रविष्टया ॥ ४६

नापि स मुनितोद्यान दृष्टोत्कण्ठाभिकाङ्क्षम् ।
कामाङ्गदाहवेगम्याहृतं मधुमिवाश्रितम् ॥ ४७

तथानुरागविवशा भेजे कन्या विहस्तताम् ।
यथा सखीव वीणान्या स्थाकुलालापतां ययौ ॥ ४८

ततः स पप्रच्छ सखीं तस्या जीमूतवाहनः ।
किं धन्यं नाम तस्या नेऽपि वंशोऽलङ्कृतोऽनया ॥ ४९

तच्छ्रुत्वा ता सखी प्राह नाम्ना मलयवत्यसौ ।
मित्रावसुस्वसा सिद्धराजविश्वावसोः सुता ॥ ५०

एवमुक्त्वा तद्हृद्या सा न जीमूतवाहनम् ।
नामान्वयौ च पृष्ट्वास्य मुनिपुत्र सहागतम् ॥ ५१

तां ब्रवीति स्म मलयवतीं स्मितमितास्मरम् ।
सखि विद्याधरेन्द्रस्य नास्यातिथ्यं करोषि किम् ॥ ५२

जगत्पूज्योऽतिथिर्ह्येष प्राप्त इत्युदिते तया ।
साभूद्विद्याधरसुता तूष्णीं लज्जानतानना ॥ ५३

लज्जावतीयं मत्तोऽर्घ्यं गृह्यतामिति वादिनी ।
एकाथ तत्सखी तस्मै साघ्र्यां मालामुपानयत् ॥ ५४

स चाद्रापिव जीमूतवाहन प्रेमनिर्भरः ।
कण्ठे मलयवत्यास्तां मालां तस्या समर्पयत् ॥ ५५

सापि तिर्यक्प्रसृतया पश्यन्ती स्निग्धया दृशा ।
नीलोत्पलमयीं मालामिव तस्मिन्न्यवेशयत् ॥ ५६

इत्यन्योन्यकृताशब्दस्वयंवरविशेषयोः ।
तयोरेत्य जगादैका चेटी ता सिद्धकन्यकाम् ॥ ५७

जननी राजपुत्रि त्वां स्मरत्यागच्छ माचिरम् ।
तच्छ्रुत्वाकृष्य कामेषुकीलितामिव कृच्छ्रतः ॥ ५८

सोत्कां प्रियमुखाद्दृष्टिं कथंचित्सा ययौ गृहम् ।
जीमूतवाहनोऽप्यागात्तद्गतात्मा स्वमाश्रमम् ॥ ५९

साथ स्वां जननीं दृष्ट्वा प्राणेशविरहातुरा ।
गत्वा मलयवत्याशु पपात शयनीयके ॥ ६०

अथान्तर्गतकामाग्निधूमेनेवाविलेक्षणा ।
अश्रुधाराः प्रमुञ्चन्ती संतापक्वथिताङ्गका ॥ ६१

सखीभिश्चन्दनोल्लिप्ता वीजिता चाब्जिनीदलैः ।
रतिं न भेजे शयने नाङ्के सख्या न भूतले ॥ ६२

गतेऽथ वासरे क्वापि रक्तया सह सन्ध्यया ।
हसत्प्राचीमुखं चन्द्रे समाक्रम्य च चुम्बति ॥ ६३

स्मरेण प्रेर्यमाणापि दूतीसंप्रेषणादि सा ।
लज्जया नाशकत्कर्तुं जीवितस्पृहयोज्झिता ॥ ६४

निनाय च निशामिन्दुविषमामब्जिनीव ताम् ।
बद्धमोहालिपटले हृदि संकोचमेत्य सा ॥ ६५

तावच्च तद्वियोगार्तः सोऽपि जीमूतवाहनः ।
शयनस्थोऽपि पतितो हस्ते कुसुमधन्वनः ॥ ६६

नूतनोद्भिन्नरागोऽपि प्रोन्मिषत्पाण्डुरच्छविः ।
ह्रीमूकोऽपि वदन्पीडां कामजामनयन्निशाम् ॥ ६७

प्रातश्चात्युत्सुको भूयस्तद्गौर्यायतनं ययौ ।
यत्र दृष्टाभवत्तेन सा सिद्धाधिपपुत्रिका ॥ ६८

तत्र तेन स मित्रेण मुनिपुत्रेण पृष्ठतः ।
आगत्याश्वास्यते यावन्मदनानलविह्वलः ॥ ६९

तावत्तत्रैव साप्यागान्निर्गत्यैकैव निर्जने ।
गुप्तं मलयवत्यात्मत्यागाय विरहासहा ॥ ७०

अलक्षयन्ती कान्तं स्वं पादपान्तरितं च सा ।
उदश्रुलोचना बाला देवीं गौरीं व्यजिज्ञपत् ॥ ७१

त्वद्भक्त्या देवि संवृत्ता नास्मिञ्जन्मनि चेन्मम ।
जीमूतवाहनो भर्ता तद्भूयात्सोऽन्यजन्मनि ॥ ७२

इत्युक्त्वा रचयामास स्वोत्तरीयेण तत्क्षणम् ।
अशोकतरुशाखायां पाशं सा गिरिजाग्रतः ॥ ७३

हा नाथ विश्वविख्यातकरुणेनापि न त्वया ।
कथमस्मि परित्राता देव जीमूतवाहन ॥ ७४

एवमुक्त्वा गले यावत्सा तं पाशं नियच्छति ।
उच्चचार दिवस्तावद्भारती देव्युदीरिता ॥ ७५

पुत्रि मा साहसं कार्षीश्चक्रवर्ती पतिस्तव ।
विद्याधरेन्द्रो जीमूतवाहनो हि भविष्यति ॥ ७६

इत्युक्तवत्यां देव्या न श्रुत्वेव सवयस्यकः ।
जीमूतवाहनो हृष्टः प्रियामुपजगाम ताम् ॥ ७७

सैष देव्या वरः पश्य वितीर्णः सत्य एव ते ।
इति जल्पति चार्त्तां तां तन्मित्रे मुनिपुत्रके ॥ ७८

जीमूतवाहनस्तत्तद्ब्रुवन्प्रणयपेशलम् ।
स्वहस्तेनैव तं तस्याः कण्ठात्पाशमपानयत् ॥ ७९

ततोऽकस्मात्सुधावर्षमिव मन्वानयोस्तयोः ।
भुवं मलयवत्यां च लिखन्त्यां ह्रीतया दृशा ॥ ८०

चिन्वानागत्य सहसा सखी हृष्टा जगाद ताम् ।
सखि कल्याणिनी दिष्ट्या वर्धसेऽभीष्टसिद्धितः ॥ ८१

अद्यैव हि महाराजस्तव विश्वावसुः पिता ।
कुमारमित्रावसुना विज्ञप्तः संनिधौ मम ॥ ८२

इहागतो जगन्मान्यस्तात कल्पतरुप्रदः ।
विद्याधरेन्द्रतनयो योऽयं जीमूतवाहनः ॥ ८३

अतिथित्वात्स नः पूज्यो वरश्चान्यो न तादृशः ।
तस्मान्मलयवत्यासौ कन्यारत्नेन पूज्यताम् ॥ ८४

तथेति श्रद्दिते राज्ञा भ्राता मित्रावसुः स ते ।
तादर्थ्येन महाभागस्यास्याश्रमपदं गतः ॥ ८५

जाने सद्यश्च भावी ते विवाहस्तत्स्वमन्दिरम् ।
आयाहि यातु चैषोऽपि महाभागः स्वमास्पदम् ॥ ८६

इत्युक्ता सा तया सख्या राजपुत्री शनैस्ततः ।
ययौ सहर्षा सोत्का च मुहुर्वलितकंधरा ॥ ८७

जीमूतवाहनोऽप्याशु गत्वा स्वाश्रममागतात् ।
मित्रावसोर्यथाभीष्टं कार्यं श्रुत्वाभिनन्द्य च ॥ ८८

जातिस्मरः समाचख्यौ तस्मै स्वं पूर्वजन्म सः ।
यत्र मित्रं स तस्यासीत्सा च भार्यैव तत्स्वसा ॥ ८९

ततो मित्रावसुः प्रीतस्तात्पित्रोः परितुष्यतोः ।
आवेद्य गत्वा पितरौ कृतार्थः स्वावनन्दयत् ॥ ९०

निनाय च तदैव स्वान्गृहाज्जीमूतवाहनम् ।
चक्रे चोत्सवसंभारं स्वसिद्ध्युचितवैभवम् ॥ ९१

तस्मिन्नेव च धन्येऽह्नि तस्य विद्याधरप्रभोः ।
स्वसुर्मलयवत्याश्च विवाहं समपादयत् ॥ ९२

ततो नवोढया साकं तया जीमूतवाहनः ।
तस्थौ मलयवत्या स तत्र सिद्धमनोरथः ॥ ९३

एकदा कौतुकाच्चात्र स मित्रावसुना सह ।
मलयाद्रौ भ्रमन्नब्धेर्वेलावनमुपेयिवान् ॥ ९४

तत्रास्थिराशीन्सुबहून्दृष्ट्वा मित्रावसुं स तम् ।
केषामेतेऽस्थिसंघाताः प्राणिनामिति पृष्टवान् ॥ ९५

ततो मित्रावसुः श्यालस्तं कारुणिकमब्रवीत् ।
शृणु वृत्तान्तमत्रेमं संक्षेपाद्वर्णयामि ते ॥ ९६

नागमाता पुरा कद्रूर्विनतां तार्क्ष्यमातरम् ।
निनाय किल दासत्वं सव्याजपणनिर्जिताम् ॥ ९७

तेन वैरेण गरुडस्तान्मुमोच्यापि मातरम् ।
बली भक्षयितुं नागान्कद्रूपुत्रान्प्रचक्रमे ॥ ९८

सदा प्रविश्य पातालं सोऽथ कांश्चिज्जघास तान् ।
कांश्चिन्ममर्द केचित्तु स्वयं त्रासाद्विपेदिरे ॥ ९९

तद्दृष्ट्वैकपदे सर्वक्षयमाशङ्क्य नागराट् ।
वासुकिः प्रार्थनापूर्वं तार्क्ष्यस्य समयं व्यधात् ॥ १००

एकमेकमहं नागमाहारार्थं खगेन्द्र ते ।
प्रत्यहं प्रेषयाम्यत्र पुलिने दक्षिणोदधेः ॥ १०१

त्वया तु न प्रवेष्टव्यं पातालेऽस्मिन्कथंचन ।
को हि स्वार्थो विनष्टेषु नागेष्वेकपदे तव ॥ १०२

इत्युक्ते नागराजेन समयं प्रत्यपद्यत ।
स्वार्थदर्शी तथेत्येव गरुडो गुरुविक्रमः ॥ १०३

ततःप्रभृति चैकैकं नागं भुङ्क्ते दिने दिने ।
वासुकिप्रेषितं सोऽत्र नगेन्द्रः पुलिनेऽम्बुधेः ॥ १०४

अतस्तद्भक्ष्यमाणानां नागानामस्थिसंचयाः ।
एतेऽत्र गिरिशृङ्गाभा वृद्धिं कालक्रमाद्गताः ॥ १०५

इति मित्रावसोर्वक्त्रात्तद्दुःखो निशम्य सः ।
निजगाद दयाधैर्यनिधिर्जीमूतवाहनः ॥ १०६

शोच्यः स वासुकी राजा यः स्वहस्तेन विद्विषे ।
उपहारीकरोति स्वाः प्रजाः क्लीबो दिने दिने ॥ १०७

धृताननसहस्रः सन्नेकेनाप्याननेन सः ।
मामादौ भुङ्क्ष्व तार्क्ष्येति भाषितुं नाशकत्कथम् ॥ १०८

कथं चाभ्यर्थयामास निःसत्त्वः स्वकुलक्षयम् ।
तार्क्ष्यं नागाङ्गनाक्रन्दनित्याकर्णननिर्घृणः ॥ १०९

तार्क्ष्योऽपि काश्यपिर्वीरः कृष्णाधिष्ठानपावनः ।
ईदृशं कुरुते पापमहो मोहस्य गाढता ॥ ११०

इत्युक्त्वा स महासत्त्वो हृदि चक्रे मनोरथम् ।
अप्यसारेण देहेन सारमत्राप्नुयामहम् ॥ १११

एकस्याप्यद्य नागस्य कुर्यां जीवितरक्षणम् ।
अबान्धवस्य भीतस्य दत्त्वात्मानं गरुत्मते ॥ ११२

इति संचिन्तयत्येव तस्मिञ्जीमूतवाहने ।
मित्रावसोः पितुः पार्श्वात्क्षत्ताह्वानार्थमाययौ ॥ ११३

व्रज त्वमहमेष्यामि पश्चादिति ततश्च तत् ।
मित्रावसुं स जीमूतवाहनो व्यसृजद्गृहम् ॥ ११४

गते तस्मिन्स चात्रैको वाञ्छितार्थोन्मुखो भ्रमन् ।
कृपालुरशृणोद्दूरात्करुणं रुदितध्वनिम् ॥ ११५

गत्वा ददर्श चोत्तुङ्गशिलातलसमीपगम् ।
युवानमेकं पुरुषं दुःखितं सुन्दराकृतिम् ॥ ११६

पुंसा राजभटेनेव त्यक्तमानीय तत्क्षणम् ।
निवर्तयन्तं रुदतीं वृद्धां सानुनयं स्त्रियम् ॥ ११७

कोऽयं स्यादिति यावच्च जिज्ञासुः सोऽत्र तिष्ठति ।
करुणाकुलितश्छन्नः शृण्वञ्जीमूतवाहनः ॥ ११८

तावत्सा तत्र वृद्धा स्त्री दुःखभारातिपीडिता ।
प्रावर्तत युवानं तं दृष्ट्वा दृष्ट्वानुशोचितुम् ॥ ११९

हा शङ्खचूड हा दुःखशतसमाप्त हा गुणिन् ।
कुलैकतन्तो हा पुत्र क्व त्वां द्रक्ष्याम्यहं पुनः ॥ १२०

वत्स त्वन्मुखचन्द्रेऽस्मिन्गतेऽस्तं स पिता तव ।
शोकान्धकारपतितः कथं वृद्धो भविष्यति ॥ १२१

अथार्ककरसंस्पर्शादङ्गं दूयेत यत्तव ।
कथं शक्ष्यति तत्सोढुं तार्क्ष्यभक्षणजां रुजम् ॥ १२२

विस्तीर्णे नागलोकेऽपि धात्रा नागाधिपेन च ।
लब्धस्त्वं किमभव्याया विचित्यैकसुतो मम ॥ १२३

इति तां विलपन्तीं च स युवा तनयोऽब्रवीत् ।
दुःखार्तमपि मामम्ब किं दुःखयसि हा भृशम् ॥ १२४

निवर्तस्व गृहानेष प्रणामः पश्चिमस्तव ।
इहागमनवेला हि भवेज्जातु गरुत्मतः ॥ १२५

तच्छ्रुत्वा हा हतास्मीह को मे पास्यति पुत्रकम् ।
इति चक्रन्द सा वृद्धा दिक्षु क्षिप्तार्तलोचना ॥ १२६

तावच्च बोधिसत्त्वांशः स तज्जीमूतवाहनः ।
श्रुत्वा दृष्ट्वा च कृपया गाढाक्रान्तो व्यचिन्तयत् ॥ १२७

हन्तायं शङ्खचूडाख्यो नागो वासुकिना बत ।
आहारहेतोस्तार्क्ष्यस्य तपस्वी प्रेषितोऽधुना ॥ १२८

इयं चैतस्य जननी स्नेहेनेहान्वगागता ।
एतदेकसुता वृद्धा दुःखदीनप्रलापिनी ॥ १२९

तदेनमेकमार्तं चेद्देहेनैकान्तनाशिना ।
रक्षामि नामुना नागं तन्मे धिग्जन्म निष्फलम् ॥ १३०

इत्यालोच्योपगम्यैव मुदा जीमूतवाहनः ।
वृद्धामुवाच तां मातः पुत्रं रक्ष्याम्यहं तव ॥ १३१

तच्छ्रुत्वा भावितभया वृद्धा गरुडशङ्किनी ।
संत्रस्ता तार्क्ष्य मां भुङ्क्ष्व मा भुङ्क्ष्वेति जगाद सा ॥ १३२

शङ्खचूडस्ततोऽवादीत्तेन ताम्यन्नस्य मा भ्रमः ।
कथं चन्द्रप्रसादे च न नास्यां मत्परः ॥ १३३

इत्युक्ते शङ्खचूडेन प्राह जीमूतवाहनः ।
विद्याधरोऽहमायातो रक्षितुं सुतमद्य ते ॥ १३४

दास्यामि हि शरीरं स्वं वस्त्रच्छन्नं गरुत्मते ।
क्षुधिताय मयाहि त्वमादायैनं सुतं गृहम् ॥ १३५

तच्छ्रुत्वा नागवृद्धा सा मैवं त्वं ह्यधिको मम ।
पुत्रो यस्येदृशे काले कृपास्मास्वियमीदृशी ॥ १३६

एतच्छ्रुत्वा स जीमूतवाहनः पुनरब्रवीत् ।
न मे मनोरथस्यास्य भङ्गं कर्तुमिहार्हथ ॥ १३७

महादेवं ब्रुवाणं च शङ्खचूडो जगाद तम् ।
दर्शितैव महासत्त्व त्वया सत्त्व कृपालुता ॥ १३८

नत्वहं त्वच्छरीरेण रक्ष्यामि स्वशरीरकम् ।
रत्नव्ययेन पाषाणं को हि रक्षितुमर्हति ॥ १३९

मादृशैस्तु जगत्पूर्णं स्वात्ममात्रानुकम्पिभिः ।
अनुकम्प्य जगद्येषां विरलास्ते भवादृशाः ॥ १४०

न चाहं मलिनीकर्तुं शङ्खपालकुलं शुचि ।
कलङ्क इव शीतांशुबिम्बं शक्ष्यामि सन्मते ॥ १४१

इति तं प्रतिषिध्यैव शङ्खचूडः स्वमातरम् ।
जगादाम्ब निवर्तस्व कान्ताराद्दुर्गमादितः ॥ १४२

न पश्यसि किमत्रैतन्नागासृक्कर्दमोक्षितम् ।
कृतान्तलीलापर्यङ्करौद्रं वध्याशिलातलम् ॥ १४३

अहं चाब्धितटे गत्वा नत्वा गोकर्णमीश्वरम् ।
आगच्छामि द्रुतं यावन्नायाति गरुडोऽत्र सः ॥ १४४

इत्युक्त्वा करुणाक्रन्दां प्रणम्यापृच्छ्य मातरम् ।
स गोकर्णप्रणामार्थं शङ्खचूडो ययौ ततः ॥ १४५

अस्मिंश्चेदन्तरे प्राप्तस्तार्क्ष्यः सिद्धो ममेप्सितः ।
परार्थ इति जीमूतवाहनोऽप्यकरोद्धृदि ॥ १४६

तावच्चासन्नपक्षीन्द्रपक्षानिलचलांस्तरून् ।
विलोक्यात्र स मामेति निवारणपरानिव ॥ १४७

मत्वा गरुडवेलां च प्राप्तां जीमूतवाहनः ।
परार्थप्राणदो वध्यशिलामध्यारुरोह ताम् ॥ १४८

पवनाघूर्णिते चाब्धौ स्फुरद्रत्नप्रभाद्दृशा ।
तं सत्त्वातिशयं तस्य पश्यतीव सविस्मयम् ॥ १४९

आगत्याच्छादितनभा निपत्यैतच्छिलातलात् ।
चञ्च्वा गरुत्मानाहत्य महासत्त्वं जहार तम् ॥ १५०

स्रुतासृग्धारमुत्खातशिरोरत्नं च तं जवात् ।
नीत्वा भक्षयितुं शृङ्गे मलयाद्रेः प्रचक्रमे ॥ १५१

एवमेव परार्थाय देहः स्यात्प्रतिजन्म मे ।
मा भूतां स्वर्गमोक्षौ तु परोपकृतिवर्जितौ ॥ १५२

इति ताक्ष्यर्याद्यमानस्य तस्यानुध्यायतस्तदा ।
विद्याधरेन्द्रोरपतत्पुष्पवृष्टिर्नभस्तलात् ॥ १५३

अत्रान्तरे स तद्रक्तधारास्रवशिरोमणिः ।
तस्या मलयवत्याश्च तत्पत्न्याः प्रापतत्पुरः ॥ १५४

सा तद्दृष्ट्वा परिज्ञाय चूडारत्नं सुविह्वला ।
अन्तिकस्था श्वशुरयोस्ताभ्यां साश्रुरदर्शयत् ॥ १५५

तौ च जायापती सूनोः शिरोरत्नं विलोक्य तत् ।
किमेतदिति संभ्रान्तौ सहसैव बभूवतुः ॥ १५६

ततः स्वविद्यानुध्यानाद्यथावृत्तमवेत्य तत् ।
राजा जीमूतकेतुः सा राज्ञी कनकवत्यपि ॥ १५७

वध्वा मलयवत्या तौ प्रावर्तेतां सह द्रुतम् ।
गन्तुं तत्रैव तौ यत्र ताक्ष्यर्यजीमूतवाहनौ ॥ १५८

तावत्स शङ्खचूडोऽत्र नत्वा गोकर्णमागतः ।
ददर्श रुधिरार्द्रं तद्विग्नो वध्यशिलातलम् ॥ १५९

हा हतोऽस्मि महापापो ध्रुवं तेन महात्मना ।
आत्मा गरुत्मते दत्तो मत्कृते करुणालुना ॥ १६०

तदान्विष्यामि नीतः स क्षणेऽस्मिन्क्वाहिवैरिणा ।
मज्जेयं नायशःपङ्के जीवन्तं चेत्तमाप्नुयाम् ॥ १६१

इत्युदश्रुर्वदन्सोऽथ साधुर्दृष्ट्वा निरन्तराम् ।
पतितां भुवि तद्रक्तधारामनुसरन्ययौ ॥ १६२

अत्रान्तरे भक्षयन्तं दृष्ट्वा जीमूतवाहनम् ।
हृष्टं विस्मय गरुडश्चिन्तयामास तत्क्षणम् ॥ १६३

अहो अपूर्वः कोऽप्येष भक्ष्यमाणोऽपि यो मया ।
प्रहृष्यति महासत्त्वो न तु प्राणैर्वियुज्यते ॥ १६४

बिभर्ति पुलकोद्भेदं च गात्रे रोमाञ्चकञ्चुकम् ।
किं चोपकारिणीवास्य मयि दृष्टिः प्रसीदति ॥ १६५

तन्नैष नागः कोऽप्येष साधुः पृच्छामि तावदहम् ।
इति तार्क्ष्यं विमृशन्तं प्राह जीमूतवाहनः ॥ १६६

पक्षीन्द्र किं निवृत्तोऽसि नहि मे मांसशोणितम् ।
देहे नास्ति न चाद्यापि परितृप्तोऽसि भुङ्क्ष्व तत् ॥ १६७

एतच्छ्रुत्वातिसाश्चर्यस्तं पप्रच्छ स पक्षिराट् ।
नागो नैवासि तद्ब्रूहि महात्मन्को भवानिति ॥ १६८

नाग एवास्मि कोऽयं नु प्रश्नः प्रकृतमाचर ।
प्रस्तुतार्थविरुद्धं हि कोऽभिदध्याद्यादृशः ॥ १६९

एवं प्रतिवदत्येव तार्क्ष्यं जीमूतवाहने ।
प्राप्तः स शङ्खचूडोऽत्र दूरादेवाभ्यभाषत ॥ १७०

मा मा कृथा महापापं नायं मे विनतात्मज ।
कोऽयं भ्रमस्ते नह्येष नागो नागोऽहमेव ते ॥ १७१

इत्युक्त्वा द्रुतमागत्य मध्ये स्थित्वा तयोर्द्वयोः ।
दृष्ट्वा च तार्क्ष्यं विभ्रान्तं शङ्खचूडोऽब्रवीत्पुनः ॥ १७२

किं भ्राम्यसि फणाः किं मे जिह्वे द्वे च न पश्यसि ।
विद्याधरस्य किं चास्य सौम्यां पश्यसि नाकृतिम् ॥ १७३

शङ्खचूडे वदत्येवं भार्या च पितरौ च तौ ।
जीमूतवाहनस्यात्र सर्वे सत्वरमाययुः ॥ १७४

विलुप्ताङ्गं च तं दृष्ट्वा पितरौ तस्य तत्क्षणम् ।
चक्रन्दतुस्तौ हा पुत्र हा हा जीमूतवाहन ॥ १७५

हा कारुणिक हा वत्स परार्थप्रत्तजीवित ।
हा कथं वैनतेयेदमविमृश्य कृतं त्वया ॥ १७६

एतच्छ्रुत्वैव तार्क्ष्योऽत्र सोऽनुतप्तो व्यचिन्तयत् ।
हा कथं बोधिसत्त्वांशः समोहाद्भक्षितो मया ॥ १७७

जीमूतवाहनः सोऽय परार्थप्राणदायकः ।
यस्य भ्रमति कृत्स्नेऽस्मिंस्त्रैलोक्ये कीर्तिघोषणा ॥ १७८
तन्मे मृतेऽस्मिन्पापस्य प्राप्तमग्निप्रवेशनम् ।
अधर्मविषवृक्षस्य पच्यते स्वादु किं फलम् ॥ १७९
इति चिन्ताकुले तार्क्ष्ये दृष्ट्वा बन्धून्निपत्य सः ।
व्रणव्यथाया पञ्चत्व प्राप जीमूतवाहनः ॥ १८०
ततो विलपतोस्तत्र तत्पित्रोः शोकदीनयोः ।
उत्क्रुश्य मुहुरात्मानं शङ्खचूडे च निन्दति ॥ १८१
भार्या मलयवत्यस्य नभो दृष्ट्वाश्रुगद्गदम् ।
पूर्वप्रसन्नां वरदामित्युपालभताम्बिकाम् ॥ १८२
विद्याधराधिपो भाविचक्रवर्ती पतिस्तव ।
भवितेत्यहमादिष्टा देवि गौरि तदा त्वया ॥ १८३
तन्मिथ्यावादिनी जाता त्वमप्यसि कथ मयि ।
इत्युक्तवत्यां तस्यां सा गौरी प्रत्यक्षतामगात् ॥ १८४
न मे मिथ्या वचः पुत्रीत्युक्त्वा सा स्वकमण्डलोः ।
अमृतेनाशु जीमूतवाहनं सिञ्चति स्म तम् ॥ १८५
तेन सोऽक्षतसर्वाङ्गः पूर्वाधिकतरद्युतिः ।
जीवन्सद्यः समुत्तस्थौ कृती जीमूतवाहनः ॥ १८६
उत्थितं प्रणतं तं च सर्वेषु प्रणमत्सु ता ।
उवाच देवी तुष्टास्मि देहदानेन तेऽमुना ॥ १८७
तदेषा त्वाभिषिञ्चामि पुत्रात्मीयेन पाणिना ।
विद्याधराणामाकल्प चक्रवर्तिपदेऽधुना ॥ १८८
एवं वदन्ती जीमूतवाहन कलशाम्बुभिः ।
तमभ्यषिञ्चच्छर्वाणी पूजिता च तिरोदधे ॥ १८९
निपेतुश्चात्र तत्कालं दिव्याः कुसुमवृष्टयः ।
नदन्ति स्म च सानन्द देवदुन्दुभयो दिवि ॥ १९०
अथोवाच स तं प्रह्वस्तार्क्ष्यो जीमूतवाहनम् ।
चक्रवर्तिन्नह प्रीतः पुरुषातिशये त्वयि ॥ १९१
अपूर्वोदारमतिना त्रिजगत्कौतुकावहम् ।
ब्रह्माण्डभित्तिलिखित येन चित्रामद कृतम् ॥ १९२
तन्मां प्रशाधि मत्तश्च वृणुष्वाभीप्सितं वरम् ।
इत्युक्तवन्त गरुड महासत्त्वो जगाद सः ॥ १९३

# APPENDIX C.

## Proverbial passages from the Nāgānada

१ अन्योन्यप्रीतिकृत: समानरूपानुरागकुलवयसाम् ।
केषांचिदेव मन्ये समागमो भवति पुण्यवताम् ॥ (२ १४)

२ आत्मीय: पर इत्ययं खलु कुत: सत्यं कृपाया: क्रम: । (५ २०.प्र०)

३ आयास: खलु राज्यमुज्झितगुरोस्तत्रास्ति कश्चिद्गुण: । (१.६ च०)

४ एक: श्लाघ्यो विवस्वान् परहितकरणायैव यस्य प्रयास: । (३,१८ च०)

५ किं मधुमथनो वक्ष:स्थलेन लक्ष्मीमनुद्वहन् निर्वृत्तो भवति । (२.०.९८)

६ कीदृशो नवमालिकया विना शेखरक: । (३ २ १८)

७ क्रोडीकरोति प्रथम यदा जातमनित्यता ।
धात्रीव जननी पश्चात्तदा शोकस्य क: क्रम: ॥ (४ ८)

८ चिरात्खलु युक्तकारी विधि: स्याद्यदि युगलमेतदन्योन्यानुरूप घटयेत् । (१.१७.३)

९ जाता वामतयैव मेऽद्य सुतरां प्रीत्यै नवोढा प्रिया ॥ (३.४ च०)

१० जायन्ते च म्रियन्ते च मादृशा: क्षुद्रजन्तव: ।
परार्थदत्तदेहाना त्वादृशा सभव: कुत: ॥ (४.१६)

११ त्व मया सबन्धीति कृत्वा परिहसित: । (३.३.४५)

१२ निर्दोषदर्शना हि कन्यका । (१.१४.१५)

१३ मेदोऽस्थिमांसमज्जासृक्सघातेऽस्मिंस्त्वचावृते ।
शरीरनाम्नि का शोभा सदा बीभत्सदर्शने ॥ (५ २३)

१४ रत्नाकरादृते कुतश्चन्द्रलेखाया: प्रसूति: । (२.१२.१३)

१५ वन्द्या: खलु देवता: । (१ १२.८)

१६ स खल्वेषोऽस्या:दरोऽनर्थीभूत: । (३.२ ३७)

१७ संरक्षता पन्नगमद्य पुण्य मयार्जित यत् स्वशरीरदानात् ।
भवे भवे तेन ममैव भूयात् परोपकाराय शरीरलाभ: ॥ (४.२६)

१८ सर्वाशुचिनिधानस्य जरत्तृणलघीयस: ।
शरीरकस्यापि कृते मूढा: पापानि कुर्वते ॥ (४.७)

१९ स्वगृहोद्यानगतेऽपि स्निग्धे पाप विशङ्क्यते स्नेहात् । (५.१.प्र०)

२० स्वाङ्गैरेव विभूषितासि वहसि क्लेशाय किं मण्डनम् ॥ (३.६.प्र०)

## APPENDIX I

## A NOTE ON METRE

A Sanskrit stanza or padya consists of four Padas or quarters, which are regulated either by the number of syllables (अक्षर), or by the number of syllable instants (मात्रा)

If the number and position of syllables in each quarter are fixed, the padya is called वृत्त It is समवृत्त if all the quarters are similar, अर्धसमवृत्त if the alternate quarters are similar, and विषमवृत्त if all the quarters are dissimilar If the number of syllable instants in each quarter is fixed the padya is called जाति

A syllable or अक्षर is as much of a word as can be pronounced at once, i e a vowel with or without one or more consonants. A syllable is लघु (short) or गुरु (long) according as its vowel is short or long अ, इ, उ ऋ and ऌ are short vowels आ, ई, ऊ, ॠ, ए, ऐ, ओ and औ are long ones. If a short vowel is followed by an anusvāra or visarga or a conjunct consonant, it becomes long in prosody. So also the last syllable of a pāda is either long or short according to the exigence of the metre (सानुस्वारश्च दीर्घश्च विसर्गी च गुरुर्भवेत् । वर्णः संयोगपूर्वश्च तथा पादान्तगोऽपि वा)

In stanzas of the जाति class, one मात्रा is allotted to a short vowel and two to a long one

For the purpose of scanning stanzas regulated by the number of syllables, a quarter is divided into गणs (feet) of three syllables each, and in case the number of syllables in the quarter is not exactly divisible by three, each of the remaining syllables becomes a गण. The following verse gives the names and scheme of possible गणs (आदिमध्यावसानेषु यरता यान्ति लाघवम् । भजसा गौरवं यान्ति, मनौ तु गुरुलाघवम् ॥ also मस्त्रिगुरुस्त्रिलघुश्च नकारो भादिगुरुः पुनरादिलघुर्यः । जो गुरुमध्यगतो रलमध्यः सोऽन्तगुरुः कथितोऽन्तलघुस्तः ॥) Expressed in symbols (the symbol ◡ denoting a short syllable, and — a long one), the different गणs may be represented as follows —

य ◡ — — भ — ◡ ◡ म — — —
र — ◡ — ज ◡ — ◡ न ◡ ◡ ◡
त — — ◡ स ◡ ◡ — ल ◡ ग —

यति is the pause which we have to make in reciting a line.

The Nāgānanda has in all 121 verses and 12 different metres are used.

अनुष्टुभ्—8 syllables in a quarter. The fifth syllable of each quarter should be short, the sixth long and the seventh alternately long or short. ( श्लोके षष्ठं गुरु ज्ञेयं सर्वत्र लघु पञ्चमम् । द्विचतुःपादयोर्ह्रस्वं सप्तमं दीर्घमन्ययोः ॥).The following 24 verses are in this metre ( I ) 4, 9, 19; ( II ) 7, 9, 12; ( III ) 11, 12, ( IV ) 7, 8, 11, 16, 17, 20, 21, 29, ( V ) 9, 10, 11, 16 23, 25, 28, 33

इन्द्रवज्रा—11 syllables in a quarter यति at the fifth. स्यादिन्द्रवज्रा यदि तौ जगौ ग', गणs त, त, ज, ग, ग, only one verse in this metre (IV) 5.

उपजाति.—This is a composite metre formed of the combination of इन्द्रवज्रा and उपेन्द्रवज्रा ( which is exactly like इन्द्रवज्रा, except that its first syllable is short, गणs ज, त, ज, ग, ग ). 11 syllables in a quarter. The following 6 verses are in this metre. ( IV ) 1, 13, 14, 26, ( V ) 15, 22.

द्रुतविलम्बितम्–12 syllables in a quarter यति at the 4th or twice at the 4th and the 8th द्रुतविलम्बितमाह नभौ भरौ, गणs, न, भ, भ, र; only one verse in this metre ( I ) 16.

मालिनी— 15 syllables in a quarter यति at the 8th ननमयययुतेयं मालिनी भोगिलोकैः । गणs. न, न, म, य. य. Two verses in this metre ( I ) 11, ( II ) 11

वसन्ततिलका—14 syllables in a quarter यति at the 8th उक्ता वसन्ततिलका तभजाजगौ ग. । गणs, त, भ, ज, ज, ग, ग The following 8 verses are in this metre ( III ) 16, ( IV ) 6, ( V ) 3. 5, 6, 12, 29, 37.

शार्दूलविक्रीडितम्—19 syllables in a quarter यति at the 12th सूर्याश्वैर्यदि मः सजौ सततगाः शार्दूलविक्रीडितम् । गणs म, स, ज, स, त, त, ग. The following 32 stanzas are in this metre ( I ) 1, 3, 5, 6, 7, 8, 10, 14, 15, 17, 20; ( II ) 2, 3, 10, ( III ) 4, 5, 6, 9, ( IV ) 2, 3, 9, 10, 27; ( V ) 2, 13, 14, 17, 18, 20, 32, 36, 39.

शालिनी—11 syllables in a quarter यति at the 4th मात्तौ गौ चेच्छालिनी वेदलोकैः । गणs म, त, त, ग, ग Only one verse in this metre ( V ) 7